श्रीकाशीजीमेआदिविश्वेश्वरकेपासमहल्लाघुघुरानासामाकीगलीश्रीयुतबाबूहरखचंदजीकेबा
डेमेदुर्गाप्रसादकटारेकेगणेशयंत्रालयमेवेदान्तसारसुबोधनीटीकासंयुक्तछापागयालिखाराम
दासछापनेवालाघुरविनजिसेलेनाहोयउसेचाननीचौकमेकुंजगलीकेपश्छिमफाटककेपा
सदुर्गाप्रसादकटारेकेदुकानपरमिलैगा ॥ १

श्रीगणेशायनमः एमानंदंगुरुंनत्वापरमानन्दमद्वयम् वक्ष्येवेदान्तसारस्यटीकांनाम्नासुबोधिनीम् इहखलुकश्चिन्महापुरुषोनित्याध्ययनविध्यधीतसकलवे
दराशीनाञ्चिन्मात्राश्रयत्वेनतद्रूपाद्यानन्दविषयानाद्यनिर्वचनीयभावस्वरूपाज्ञानविलसितानंतभवानुष्ठितकाम्यनिषिद्धवर्ज्जितनित्यनैमित्तिकप्रायश्चि
त्तोपासनाकर्मभिःसम्यक्प्रपन्नेश्वराणामिष्टिकाचूर्णादिसंघर्षितादर्शनलवदतिनिर्मलाशयानांनलिनीदलगतजलविन्दुवद्धिरण्यगर्भादित्तवपर्यंतंजी
वजातंस्वात्मवन्मृत्योरास्यान्तर्गतंक्षणभंगुरंतापत्रयाग्निदंदह्यमानमहर्निशमात्मन्यनुपश्यतामतिविवेकिनांअतएवैहिकस्रक्चन्दनादिविषयभोगेभ्यः।
आमुष्मिकहिरण्यगर्भाद्यमृतभोगेभ्यश्चवांताशनइवातिनिर्विण्णमानसानांशमादिसाधनसंपन्नानामापाततोधिगताखिलवेदार्थत्वादिहामुत्रेहंकारपर्य
न्तंजडपदार्थतद्विलक्षणस्वप्रकाशस्वरूपप्रत्यगात्मनिब्रह्मानंदत्वेसंशयापन्नानांनञ्जिज्ञासूनामस्मिश्रवणेनमूलाज्ञाननिवृत्तिपरमानंदावाप्तिसिद्धयेप्रक
रणमारभमाणःतत्समाप्तिप्रचयगमनादिफलकस्यशिष्टाचारपरिप्राप्तेष्टदेवतानमस्काररूपमंगलाचरणस्यावश्यकर्त्तव्यतांप्रदर्शयंस्तत्रक्षणया।

**अखण्डंसच्चिदानन्दमवाङ्मनसगोचरम्॥ आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये॥ १॥**

नुबंधचतुष्टयंनिरूपयन्परमात्मानंनमस्कुरुतेऽखंडमित्यादिनाअखंडमितिअभीष्टस्यनिश्रेयसःसिद्धयेप्राप्त्यर्थमात्मानमाश्रयेएकत्वेनप्रतिपद्यइत्य
र्थःनन्वविषयस्यात्मनःकथंप्रतिपत्तिरित्याशंक्याह अखिलाधारमितिअखिलस्यचराचरात्मकप्रपंचस्यविवर्त्ताधिष्ठानत्वेनकारणत्वाक्रांतंब्रह्मैवप्र
तिपद्येनतुशुद्धमित्यर्थः नन्वेवंचसतिप्रतिपत्तिविषयत्वेनदृश्यत्वापत्तिरित्याशंक्याह अवाङ्मनसगोचरमिति यतोवाचोनिवर्त्तन्तइत्यादिश्रुतिभिरवि
षयत्वप्रतिपादनात्प्रतिपत्तिविषयत्वंकारणत्वोपलक्षितंब्रह्मविषयत्वेनौपचारिकमितिभावः ननुएवमपिब्रह्मणःकारणत्वेमृत्पिंडवदनित्यत्वाशंका
मपहरन्नाह सदितिनाशाभावोपलक्षितस्वरूपंसदेवसौम्येदमग्रआसीदित्यादिश्रुतेः ननुतथापिजडत्वापत्तिमाशंक्याहचिदितिस्वप्रकाशचैतन्य। एम· 
स्वरूपमितियावत् ननुतथाप्यपुरुषार्थत्वात्किमित्याश्रयणीयमित्यतआह आनंदमितिपरमानंदरूपमित्यर्थः ननुभक्षितेपिलशुनेनशान्तोव्याधि॥ १

रितिन्यायेनप्रपञ्चस्याधिष्ठानव्यतिरिक्ततयाप्रतीयमानत्वात्कथमद्वैतसिद्धिरित्याशंकांतरीकुर्वन्नाह अखंडमितिसजातीयविजातीयस्वगतभेदशून्य।
मित्यर्थः अत्रसच्चिदानंदमितिप्रयोजनम् अखंडमितिविषयः शास्त्रविषययोःप्रतिपाद्यप्रतिपादकभावःसंबंधः तत्कामोधिकारीत्यनुबंधचतुष्टयम
र्थादुक्तंभवति किंचयस्य देवेपराभक्तिर्यथादेवेतथागुरौतस्यैतेकथिताह्यर्थाः प्रकाशंतेमहात्मनइत्यादिश्रुत्यागुरुनमस्कारस्यापिशास्त्रागमत्वप्रतिपा
दनात्तन्नमस्कारोपिअवश्यंपृथक्त्वेनकार्यइतितन्नतिपूर्वकमभिधेयग्रन्थंप्रतिजानीतेअर्थोपीति अपिशब्देननकेवलंशब्दतःडित्थकपित्थादिवत्संज्ञामा
त्रंव्यवस्थितमपितु अर्थतःशब्दतश्चेतिअद्वयानंदान्गुरूनाराध्यवेदांतसारंयथामतिवक्ष्येइत्यन्वयः अद्वयश्चासावानंदश्चाद्वयानंदस्तानद्वयानंदान् अ
त्रहेतुमाह अतीतद्वैतभानतइति अतीतंगतंद्वैतभानंयतःतस्मादतीतद्वैतभानतः निरस्तसमस्तभेदज्ञानत्वादित्यर्थः तान्गुरूनाराध्यकायवाङ्मनो।

**अर्थतोप्यद्वयानंदानतीतद्वैतभानतः गुरूनाराध्यवेदान्तसारंवक्ष्येयथामति वेदान्तोनामोपनिषत्प्रमाणान्तदुपकारीणिशा
रीरकसूत्रादीनिच अस्यवेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैः तद्वत्तासिद्धेर्नतेपृथगालोचनीयाः तत्रानुबंधोनामअधि।
कारीविषयसंबन्धप्रयोजनानि॥**

९ भिर्नमस्कारगोचरीकृत्यवेदांतसारंवेदांतानामुपनिषद्वाक्यजातानांमध्येयत्सारंसिद्धांतरहस्यंयस्मिन्।
ज्ञातेपुनर्ज्ञातव्यंनावशिष्यतेतंवेदान्तसारंयथामतिबुद्धिमनतिक्रम्यवक्ष्येप्रतिपादयिष्यइत्यर्थः इदानींसर्वस्यापिवस्तुविचारस्योद्देशपूर्वकत्वात्प्रतिज्ञा।
तंवेदांतंनामतोनिर्दिशतिवेदान्तइति उपनिषदएवप्रमाणमुपनिषत्प्रमाणंउपनिषदोयत्रप्रमाणमितिवातदुपकारीणिवेदांतवाक्यसंग्राहकाणिशारीर
कसूत्रादीनि अथातोब्रह्मजिज्ञासेत्यादीनिसूत्राणिआदिशब्देनभगवद्गीताद्यध्यात्मशास्त्राणिगृह्यंतेतेषामप्युपनिषच्छब्दवाच्यत्वादितिभावः ननुय
द्यप्यंतरानुबंधचतुष्टयमापाद्यनिर्दिष्टंतथापिपरमानुबंधचतुष्टयस्यानिरूपितत्वादत्रप्रेक्षावतांप्रवृत्तिर्नस्यादित्यत आह अस्येति अस्यवेदान्तसार
स्येत्यर्थः ननुवेदान्तशास्त्रस्यापिकिमनुबंधचतुष्टयंयेनास्यापितद्वत्तासिद्धिरित्याशङ्क्यमूलशास्त्रस्यानुबंधचतुष्टयमाविष्करोतितत्रेति॥ २ ॥ २ ॥

वे॰ सा॰ अनुबंधचतुष्टयमेवाह यथोद्देशमधिकारिणं लक्षयति अधिकारी त्विति स्वाध्यायोऽध्येतव्य इति वचनात्त्रैवर्णिकानामुपनीतानामध्ययनं नियमेन विधीयते
टी॰ सु॰ अध्ययनविधिप्रयुक्तमेवाध्ययनं नाध्यापनविधिप्रयुक्तं तथा चाधीतो वेदो वेदांगानि च शिक्षाकल्पव्याकरणछंदोज्योतिषनिरुक्ताख्यानि यत्नेनापाततो ऽ
२ धिगताखिलवेदार्थः अत्र सर्ववेदार्थरहस्ये ज्ञाते सति उत्तरग्रंथवैयर्थ्यपरिहारायापाततइत्युक्तम् नन्वनधीतवेदानामपि विदुरादीनां तत्त्वज्ञानोत्पत्ति

अधिकारी तु विधिवदधीतवेदवेदांगत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन्जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरः।
सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितांतनिर्मलस्वान्तः साधनचतुष्टयसंपन्नः प्र
माताधिकारी काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि निषिद्धानि नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि नि
त्यान्यकरणे प्रत्यवायसाधनानि संध्यावन्दनादीनि नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि प्रायश्चित्तानि पापक्षय
साधनानि कृच्छ्रचान्द्रायणादीनि उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शांडिल्यविद्यादीनि एतेषां नित्यादीनां
बुद्धिशुद्धिः परं प्रयोजनम् उपासनानां तु चित्तैकाग्र्यं तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाश
केनेत्यादिश्रुतेः तपसा कल्मषं हन्ति विद्ययामृतमश्नुत इति स्मृतेश्च नित्यनैमित्तिकप्रायश्चित्तोपासनानां तु अवांतरफलं पि
तृलोकसत्यलोकप्राप्तिः कर्मणा पितृलोको विद्यया देवलोक इत्यादिश्रुतेः॥ ॥दर्शनादेवाध्ययनात्तत्प्रयुक्तकर्मानुष्ठानवैयर्थ्यमाशं ऽ
क्योत्तरमाह जन्मांतर इति तेषामाधुनिकाध्ययनाद्यभावेऽपि जन्मांतरीयाध्ययनादिनिमित्तपरिपाकवतामस्मिन्जन्मनि विनाप्यध्ययनादिना ज्ञानोत्पत्तौ। एम॰
बाधकाभावान्नाध्ययनादिवैयर्थ्यमिति भावः काम्येति काम्यस्यापि कर्मणो धर्मसाधनत्वेऽपि यातायातसंपादकत्वेन बन्धकत्वात् निषिद्धवत्तद्वर्जनपु २

तथाचनित्यादिकर्म्मानुष्ठानेननिर्गतनिखिलकल्मषतयानिःशेषनिरस्त सकलकल्मषत्वेन अत्रनिखिलपदंकाम्यनिषिद्धजनितसुकृतदुष्कृतपरन्तेननितां तनिर्म्मलस्वान्तःनितान्तमत्यन्तंनिर्म्मलंस्वच्छंस्वान्तमन्तःकरणंयस्यस तथोक्तःवक्ष्यमाणसाधनचतुष्टयसंपन्नःप्रमाताअन्तःकरणप्रतिबिंबितचैतन्यमित्यर्थः एतदेवस्पष्टंव्याकरोति काम्यानिस्वर्गादीनितत्रशमंलक्षयतिशमस्तावदितियथातीव्रायांबुभुक्षायांभोजनादन्योव्यापारोमनसोनरोचतेभोजनेविलंबंनसह तेनतथास्रक्चन्दनादिविषयेष्वत्यन्तमरुचिः तत्त्वज्ञानसाधनेषुश्रवणमननादिष्वत्यन्तमभिरुचिर्जायतेतदापूर्ववासनाबलाच्छ्रवणादिसाधनेभ्यउड्डीय।

साधनानिनित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागश मदमादिषट्कसंपत्तिमुमुक्षुत्वादीनिनित्यानित्यवस्तुविवेकस्तावद्ब्रह्मैवनित्यंवस्तुततोन्यदखिलमनित्यमितिविवेचनम् ऐहिकानांस्रक्चन्दनादिविषयभोगानांकर्म्मजन्यतयाऽनित्यत्वात् आमुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतयातेभ्योनितरांविरतिः इहामुत्रार्थफलभोगविरागः शमदमादयस्तुशमदमोपरतितितिक्षासमाधानश्रद्धाख्याः शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्योमनसोनिग्रहः दमोबाह्येन्द्रियाणांतद्व्यतिरिक्तविषयेभ्योनिवर्त्तनंनिवर्त्तितानांतेषांतद्व्यतिरिक्तविषयेभ्यउपरमणमुपरतिः॥ १४ ॥ १५ ॥ १५ ॥ १६ ॥

मानंस्रक्चन्दनादिविषयेषुगम्यमानंमनःयेनान्तःकरणवृत्तिविशेषेणनिवर्त्यतेसशमइत्यर्थः इदानींदमस्यलक्षणमाह दमइतिज्ञानसाधनश्रवणादिसाधनेभ्योविलक्षणेषुशब्दादिविषयेषुप्रवर्त्तमानानिश्रोत्रादीनिबाह्येन्द्रियाणियेनवृत्तिविशेषेणनिवर्त्त्यन्तेसदमइत्यर्थः इदानीमुपरतेर्लक्षणमाह निवर्त्तितानामिति निगृहीतानामेवतेषांबाह्येन्द्रियाणांश्रवणादिसाधनव्यतिरिक्तेषुशब्दादिविषयेषुयथातानीन्द्रियाणिसर्वथानगच्छन्तितथातेषांनिग्रहोयेनवृत्तिविशेषेणक्रियतेसोपरतिरित्यर्थः उपरतेर्लक्षणान्तरमाह॥

वे॰टी॰ सु॰ ३

अथवेतिविहितानांनित्यादिकर्म्मणांविधिनाचतुर्थाश्रमस्वीकारेणाकर्म्मणांपरित्यागः नाहंकर्त्तेत्यवस्थानमुपरतिरित्यर्थः तितिक्षायालक्षणमाह तितिक्षेतिशरीरधर्म्मस्यशीतोष्णादेः तज्जन्यसुखदुःखादेश्चशरीरस्यसक्रमशकत्वात्स्वप्रकाशचिद्रूपेस्वात्मनिच शीतोष्णादेरसंताभावादितिविवेकदीपेनमिथ्याभानस्यशीतोष्णादेर्द्वंद्वस्ययत्सहनंसातितिक्षेत्यर्थः इदानींसमाधानलक्षणमाह निगृहीतस्यमनसइति शब्दादिविषयेभ्योनिगृहीतस्यान्तःकरणस्यश्रवणादौतदनुगुणेषुतदुपकारकेषुअमानित्वादिसाधनविषयेषुसमाधिर्नैरंतर्येणानचिंतनंसमाधानमित्यर्थः श्रद्धादयःस्पष्टार्थास्तथाचपूर्वोक्त

अथवाविहितानांकर्म्मणांविधिनापरित्यागः तितिक्षाशीतोष्णादिद्वंद्वसहिष्णुता निगृहीतस्यमनसःश्रवणादौतदनुगुणविषयेषुचसमाधिःसमाधानम् गुरुवेदान्तवाक्येषुविश्वासःश्रद्धा मुमुक्षुत्वंमोक्षेच्छा एवंभूतःप्रमाताधिकारीशांतोदान्तइत्यादिश्रुतेः उक्तंचप्रशांतचित्तायजितेन्द्रियायप्रहीणदोषाययथोक्तकारिणेगुणान्वितायानुगतायसर्वदाप्रदेयमेतत्सततंमुमुक्षवइति विषयोजीवब्रह्मैक्यंशुद्धचैतन्यंप्रमेयंतत्रैववेदान्तानांतात्पर्यात् संबंधस्तुतदैक्यप्रमेयस्यतत्प्रतिपादकोपनिषत्प्रमाणस्यचबोध्यबोधकभावलक्षणः ॥

सकलविशेषणविशिष्टःप्रमाताधिकारीत्यर्थः अस्मिन्नर्थेश्रुतिंप्रमाणयतिशांतइति यथोद्देशंविषयंनिरूपयतिविषयइति अविद्याध्यारोपितसर्वज्ञत्वकिंचिज्ज्ञत्वादिविरुद्धधर्म्मपरित्यागेनावशिष्टंशुद्धंचैतन्यंज्ञेयस्वरूपमेवसर्वेषांवेदांतवाक्यानांविषयइत्यर्थः क्रमप्राप्तंसंबंधंलक्षयतिसंबंधइत्विति बोध्यबोधकभावइतिबोध्यस्यब्रह्मात्मैक्यस्वरूपस्यबोधकस्यवेदांतशास्त्रस्यचबोधकभावएवसंबंधइत्यर्थः ॥ ११ ॥ ११ ॥ ११ ॥

राम॰ ३

अवशिष्टं प्रयोजनमाह प्रयोजनं त्विति ब्रह्मात्मैकत्वलक्षणचिन्मात्रगताज्ञानतत्कार्यसकलप्रपंचनिवृत्तिः पुनरुक्तस्य भावरूपस्वस्वरूपाखंडानंद
प्राप्तिः फलमित्यर्थः ननु लोके अप्राप्तस्य क्रियासाध्यस्य स्वर्गादेः पुरुषार्थत्वेन फलत्वं दृष्टम् अत्र तु नित्यप्राप्तस्यात्मस्वरूपस्य क्रियासाध्यत्वाभावेन
पुरुषार्थत्वाभावात्कथं फलत्वमिति चेन्न अप्राप्तस्यैव पुरुषार्थत्वनियमाभावात् यथा लोके कस्यचिद्विस्मृतकंठमणेः तत्प्राप्तिशोकाग्निसंदह्यमानस्या
प्तोपदेशोत्तरकालं स्वकंठगतचामीकरप्राप्तेरपि पुरुषार्थत्वात्फलत्वं दृष्टमेवमत्रापि नित्यप्राप्तस्यात्मनः अज्ञानमोहान्धकारावृतत्वेन विस्मृतस्वस्वरू
पस्य पुरुषस्य गुरुश्रुतिवाक्यश्रवणानंतरमज्ञानमोहांधकारनिवृत्तौ सत्यां स्वयंप्रकाशमानचिद्रूपस्य सिद्धस्यैवात्मनः फलत्वमुपचर्यत इति भावः

प्रयोजनं तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च तरति शोकमात्मविद् ब्रह्मवेद ब्रह्मैवेत्यादिश्रुतेः अ-
यमधिकारी जननमरणादिसंसारानलसंतप्तोऽतिदीप्तशिराः जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुप-
सृत्य तमनुसरति समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिश्रुतेः ॥

१९ उक्तेर्थे श्रुतिं प्रमाणयति तरति शोकमात्मविद्ब्रह्मैवेत्यादीति
अधुना शास्त्रारंभनिमित्ताधिकार्यादिनिरूपणानंतरं शास्त्रारंभं प्रस्तौति अथवा लक्षितस्याधिकारिणः कर्तव्यं दर्शयति अयमधिकारीति उक्तल
क्षणलक्षितो बुद्धिसंनिहितोऽधिकारी गुरुमुपसरतीत्यर्थः ननु संसारासक्तचित्तस्य विषयलोलुपस्यार्तिरहितस्य गुरूपसर्पणमयुक्तमित्याशं
क्याह संसारानलसंतप्त इति संतापे हेतुमाह जननेति आदिशब्देन व्याध्यादयो गृह्यन्ते संतप्तस्यैव गुरूपसर्पणमित्यत्र दृष्टांतमाह प्रदीप्तशिरा इति अ
ग्निदग्धमस्तको दाहनिवृत्तिकामो यथा शीतलं जलराशिमनुसरति तथा संसारतापत्रयप्रदह्यमानस्तन्निवृत्तिकामः स्वस्वरूपजिज्ञासुः संसारनिवर्तकं श्रो
त्रियं ब्रह्मनिष्ठं करतलामलकवत्स्वप्रकाशात्मस्वरूपदर्शकं गुरुसमीपं गत्वानुसरति मनोवाक्कायकर्मभिः सेवत इत्यर्थः अस्मिन्नर्थे श्रुतिमुदाहरति स

वे·टी·
सु·
४

अथ गुरुकृत्यमाह स परमकृपयेति स पूर्वोक्तो गुरुरेनं शिष्यमुपदिशतीत्यन्वयः ननु परमरहस्यमपि ब्रह्मस्वरूपं कस्मादुपदिशतीत्यत आह कृपयेति कृपाव्यतिरेकेण साधनान्तराभावादित्यर्थः नन्वखंडस्य ब्रह्मस्वरूपस्यागोचरत्वेनोपदेष्टुमशक्यत्वात्कथमुपदिशतीत्यत आह अध्यारोपेति अखंड ब्रह्मस्वरूपस्यागोचरत्वेन विधिमुखत्वेनोपदेष्टुमशक्यत्वेपि नेह नानास्ति किंचनेत्यादिश्रुति मनुसृत्याविद्याध्यारोपितमिथ्यानात्मपदार्थनिषेध मुखेनोपलक्षितमखंडचैतन्यमेव पुनः सत्यं ज्ञानमनंतं ब्रह्मेत्यादिश्रुतिमनुसृत्य लक्षणया विधिमुखेनाप्युपदिशतीति भावः तत्र श्रुतिमाह तस्मै इति अस्मिन्नर्थे लौकिकदृष्टान्तमाह असर्पभूत इति व्यावहारिकवस्तुत्वेनाभिमतायां रज्जाववस्तुभूतसर्पारोपो नाम रज्ज्ववच्छिन्नचैतन्यविवर्तो रज्ज्वव च्छिन्नचैतन्यनिष्ठाविद्योपादानत्वेन नायं सर्पः किंतु रज्जुरिति विशेषदर्शनोत्तरकालीनाधिष्ठानरज्जुसाक्षात्कारेण रज्ज्वज्ञाननिवृत्तौ सर्पभ्रान्तिर्नि

स परमकृपयाध्यारोपापवादन्यायेनैनमुपदिशति तस्मै स विद्वानुपसन्नाय आत्मतत्त्वं प्राहेत्यादिश्रुतेः असर्पभूतायां रज्जौ सर्पारोपवद्वस्तुन्यवस्त्वारोपोऽध्यारोपः वस्तु सच्चिदानन्दाद्वयं ब्रह्म अज्ञानादिसकलजडसमूहोऽवस्तु अज्ञानं तु सदसद्भ्यामनि- ११ निर्वचनीयं त्रिगुणात्मकम्॥

वर्तत इत्यर्थः उक्तमर्थं दार्ष्टान्तिके योजयति वस्त्विति कालत्रयानपायि आत्मैव वस्तुशब्दार्थः साविद्यास र्पज्ञानाभासाकारेण परिणममाना सर्पाकारेण विवर्तते अत्रावस्तुरूपमाह अज्ञानादीति अज्ञानतज्जन्यव्योमादेर्मिथ्यात्वात् दृश्यत्वात् सावयवत्वा द्विकारित्वात्सापेक्षसिद्धिकत्वादित्यादिहेतुभिरवस्तुरित्यर्थः एतदेव विस्तरेण प्रतिपादयितुमज्ञानस्वरूपं तावदाह अज्ञानं त्विति किमिदमज्ञानं स द्रूपमसद्रूपं वा नाद्यः तस्य शशविषाणतुल्यत्वेन तुच्छत्वात् नापि द्वितीयः असतः कारणत्वानुपपत्तेरित्यादिहेतुभिः सत्त्वेनासत्त्वेन वा निरूपयितुं न शक्य त इत्याह अनिर्वचनीयमिति नन्वज्ञानस्यानिर्वचनीयत्वे सर्वथा ज्ञातुमशक्यत्वात्तदभावप्रसंगमाशंक्याह त्रिगुणात्मकमिति अजामेकामित्यादिश्रु तिभिः सत्त्वरजस्तमोगुणात्मकप्रतिपादनादित्यर्थः नन्वेवमजस्याज्ञानस्य श्रुतिप्रसिद्धस्य व्योमादिरूपेण विततस्य सत्यवद्भासमानत्वेन संसारानिवृत्ति

४

ज्ञानविरोधीति एतादृशमप्यज्ञानमात्मसाक्षात्कारेण निवर्त्तत इत्यर्थः तदुक्तं भगवता दैवी ह्येषा गुणमयी मम माया दुरत्यया मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति ज्ञानाभाव एवाज्ञानमिति तार्किकमतं निराकरोति भावरूपमिति त्रिगुणात्मकभावरूपत्वेपीदमित्थमेवेति पिंडीकृत्य प्रदर्शयितुं न शक्यत इत्याह यत्किंचिदिति किमप्यघटितघटनापटीयसीत्यर्थः अनिर्वचनीयभावरूपाज्ञानसद्भावेनुभवमेवोदाहृत्य दर्शयति अहमज्ञ इति अहमज्ञो मामहं न जानामीत्यपरोक्षावभास एव प्रमाणमित्यर्थः तस्यैवोपष्टंभकत्वेन श्रुतिमुदाहरति देवात्मशक्तिमिति अज्ञानं विभजते इदमिति वस्तुतोऽज्ञानस्यैकत्वेपि समष्ट्यभिप्रायेणैकमिति व्यवह्रियते व्यष्ट्यभिप्रायेणानेकमित्यर्थः तदेव प्रपंचयितुं प्रतिजानीते तथाहीति यथा वहूनां वृक्षा-

ज्ञानविरोधि भावरूपं यत्किंचिदिति वदन्ति अहमज्ञ इत्यनुभवात् देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिश्रुतेः इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति व्यवह्रियते तथाहि यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशः यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशः अजामेकामिति श्रुतेः इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना एतदुपहितं।

णां समुदायविवक्षया वनमित्येकत्वव्यपदेशः यथा वहूनां नद्यादिजलानां समुदायविवक्षया जलाशय इत्येकव्यपदेशः तथान्तःकरणोपाधिभेदेन नानात्वेन प्रतीयमानानां जीवगताज्ञानानां समुदायविवक्षयाऽज्ञानमित्येकत्वव्यपदेश इत्यर्थः अस्मिन्नर्थे श्रुतिं प्रमाणयति अजामिति अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः जनयन्तीं सरूपामित्यादिश्रुतेः नानाजीवगतनिकृष्टान्तःकरणव्यष्ट्युपाध्यपेक्षया समष्ट्युपाधेरस्य वैलक्षण्यं दर्शयति विगतरागादिदोषसकलकार्यप्रपंचस्य जगत्कारणभूतस्याज्ञानस्य समष्टिभूतोत्कृष्टोपाधित्वेन विशुद्धसत्त्वप्राधान्यमिति भावः एतत्समष्ट्युपाधिद्वारेणाईश्वरस्यैतन्मलस्य यति एतदुपहितचैतन्यमिति ॥

वे॰टी॰
सु॰
५

एतत्समष्ट्यज्ञानोपलक्षितं चैतन्यं सर्वस्य चराचरात्मकप्रपंचस्य साक्षित्वेन सर्वज्ञ इत्युच्यते सर्वेषां जीवानां कर्म्मानुरूपेशितृत्वेन फलदातृत्वेनेश्वर इत्युच्यते तथा सर्वेषां जीवानामंतर्हृदये स्थित्वा बुद्धिनियामकत्वेनांतर्यामीत्युच्यते प्रमाणागोचरत्वादव्यक्तमित्युच्यते सर्वस्य चराचरात्मकप्रपंचस्य विवर्त्ताधिष्ठानत्वेनान्नजगत्कारणमिति व्यपदिश्यत इत्यर्थः उक्तेऽर्थे युक्तिमाह सकलेति अत्र प्रमाणमाह य इति इदानीं तस्यैवेश्वरस्य समुदायोपाधिरेव कारणशरीरत्वमानंदमयकोशत्वं सुषुप्त्यवस्थावैशिष्ट्यं च लभत इत्याह ईश्वरस्येति कारणशरीरत्वे हेतुमाह अखिलेति आनन्दमयत्वे हेतुमाह आनंदप्रचुरत्वादिति। कारणावस्थायां प्रकृतिपुरुषमात्रव्यतिरिक्तस्य स्थूलसूक्ष्मकार्यप्रपंचस्यैवाभावादानंदवाहुल्यमिति कोशत्वे युक्तिमाह आच्छादकत्वादिति शरीराच्छादका

चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियंतृत्वादिगुणकमव्यक्तमंतर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते सकलाज्ञानावभासकत्वात् यः सर्वज्ञः स सर्वविदिति श्रुतेः ईश्वरस्येयं समष्टिरखिलकारणत्वात्कारणशरीरमानंदप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानंदमयकोशः सर्वोपरमत्वात्सुषुप्तिः अत एव स्थूलसूक्ष्मप्रपंचलयस्थानमिति चोच्यते यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशः यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीत्यनेकत्वव्यपदेशः॥ ११

चर्मवदात्माच्छादकत्वादज्ञानस्यैव कोश इति व्यवहारः ननु तथापि कारणत्वोपाधेरज्ञानस्य सुषुप्तित्वं कुत इत्यत आह सर्वोपरमत्वादिति सर्वस्य स्थूलसूक्ष्मोपाधेः कारणोपाधौ लीनत्वात्सुषुप्तित्वमित्यर्थः ननु स्थूलसूक्ष्मप्रपंचलयस्थानस्य कथं सुषुप्तित्वमित्याशंक्य संज्ञाभेद इत्याह अत एवेति यथा कारणत्वसुषुप्तित्वं अत एव पंचीकृतभूतकार्यस्य स्थूलप्रपंचस्य जाग्रदवस्थाविशिष्टस्यापंचीकृतभूतकार्यस्य सूक्ष्मप्रपंचस्य स्वाप्नप्रपंचविशिष्टस्य लयस्थानमित्यपि व्यवह्रियत इत्यर्थः समष्टिरूपाज्ञानं सप्रपंचं निरूप्येदानीं व्यष्टिभूतमज्ञानं निरूपयितुं दृष्टांतौ तावद्दर्शयति यथा वनस्येति यथा वहुवृक्षसमुदायस्य वनत्वेन रूपेणैकत्वव्यवहारेपि प्रत्येकविवक्षया चूतादयो बहवोपि वृक्षाः तिष्ठंतीति बहुत्वव्यवहारः यथा वापीकूपतडागादिषु समुदायविवक्षया जलाशय इत्येकत्वव्यवहारेपि

सम॰
५

तथासकलप्रपंचकारणस्याज्ञानस्य समुदायरूपेणैकत्वेपि अहंकारादिकारणीभूतानां जीवगताज्ञानानां प्रत्येकविवक्षया बहुत्वव्यवहार इत्यर्थः २२।
अस्मिन्नर्थे श्रुतिं प्रमाणयति इन्द्र इति ननु तथाप्येकस्यैवाज्ञानस्य तदवच्छिन्नचैतन्यस्य च व्यष्टिसमष्टिता कुत इत्यत आह अत्रेति भेदविवक्षया व्यष्टित्वं मृद्
घटादिवत् अभेदविवक्षया च समष्टित्वं मृत्पिंडवदित्यर्थः तत्र महाप्रलयकालीनसमष्ट्युपाधिभूतविशुद्धसत्त्वप्रधानाया मूलप्रकृतेः सकाशात्तदैनंदि
नप्रलयकालीनव्यष्ट्युपाधिभूतजीवप्रकृतेर्भेदं दर्शयति इयं व्यष्टिरिति इयं जीवगताज्ञानसुषुप्त्यवस्थापन्नाहंकारादिविक्षेपसंस्कारादिरूपानिकृष्टोपा
धित्वेन मलिनसत्त्वप्रधानेत्यर्थः अनेनोपाधिना प्राज्ञचैतन्यं लक्षयति एतदुपहितमिति अत्रोपपत्तिमाह एकेति ईश्वरगतमूलाज्ञानस्य जीवगताहंका

तथाज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुतेः अत्र व्यस्तसमस्तव्यापित्वेन व्य
ष्टिसमष्टिताव्यपदेशः इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना एतदुपहितं चैतन्यमल्पज्ञत्वादनीश्वरादिगुणकं।
प्राज्ञ इत्युच्यते एकाज्ञानावभासकत्वात् अस्य प्राज्ञत्वमस्पष्टोपाधितयाऽनतिप्रकाशकत्वादस्यापीयं व्यष्टिः अहंकारा।
दिकारणत्वात्कारणशरीरमानंदप्रचुरत्वात्कोशवदाच्छादकत्वादेव हेतोरानंदमयः कोशः ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

रादिविक्षेपसंस्कारादिरूपाज्ञानस्य वस्तुत एकत्वेन तदवभासके ईश्वरजीवचैतन्ययोरप्येकत्वमित्यर्थः सौषुप्तजीवचैतन्यस्य प्राज्ञत्वं साधयति अस्येति
संस्काररूपास्पष्टोपाधीनया तदावृतत्वेनातिप्रकाशकत्वाभावात्प्राज्ञत्वमस्येत्यर्थः यथाजगत्कारणेश्वरोपाधेः कारणशरीरत्वमानंदप्रचुरत्वेन चानं।
दमयत्वं कोशदृष्टांतेन च कोशत्वं तथैतत्सर्वं तारतम्येन प्राज्ञचैतन्येऽप्यतिदिशति अहंकारादीति प्रलयकाले हिरण्यगर्भादिप्रपंचोत्पादकेश्वरगतमूल
प्रकृतिवत्सुषुप्तिकालेऽहंकारादिशरीरोत्पादकसंस्कारमात्रावशिष्टजीवगताज्ञानस्यापि कारणशरीरत्वं इन्द्रियतद्विषयाभावेन व्यासंगाभावादानंद।
वाहुल्यादानंदमयत्वं कोशवदात्माच्छादकत्वात्कोशत्वं च युक्तमिति भावः ॥ ६ ॥

ननुस्थूलसूक्ष्मशरीरलयस्थानस्य कथं सुषुप्तिशब्दवाच्यत्वमित्याशंक्य पूर्ववत्संज्ञाभेदेन वस्तुभेद इति वक्तुं तत्र युक्तिमाह सर्वोपरमत्वादिति पंचीकृत। स्थूलशरीरस्य व्यावहारिकस्यापंचीकृतसूक्ष्मशरीरे प्रातिभासिके प्रविलापितत्वात्तस्यापि प्रातिभासिकस्य स्वाप्नप्रपंचस्य स्वकारणेऽज्ञाने लीनत्वात्सर्वो। परतिरित्यर्थः तथा चोक्तं लये फेनस्य तद्धर्मा द्रवाद्याः स्युस्तरंगके तस्यापि विलये नीरे तिष्ठंत्येव यथा पुरा व्यावहारिकजीवस्य लयः स्यात्प्रातिभासिके तल्ल ये सच्चिदानंदाः पर्यवस्यंति साक्षिणीति ननु प्रलयकाले सुषुप्तिकाले चांत करणतद्वृत्त्यभावेनानंदग्राहकाभावादानंदप्राचुर्यसद्भावे प्रमाणाभावमाशंक्य परिहरति तदानीमिति यथा सूक्ष्मत्वेनांतःकरणस्य वृत्तिरंगीक्रियते तथा चैतन्यप्रदीप्ताज्ञानस्यापि सूक्ष्मा वृत्तयः स्वीक्रियंते तथा चेश्वरः स्वकीयाज्ञा। नवृत्तिभिः स्वात्मानंदबाहुल्यमनुभवति जीवोपि संस्कारमात्राविशिष्टानिश्याज्ञानवृत्तिभिः स्वात्मानंदबाहुल्यं तारतम्येनानुभवतीति भावः अत्रैवोपष्टं

सर्वोपरमत्वात्सुषुप्तिः अत एव स्थूलसूक्ष्मशरीरलयस्थानमिति चोच्यते तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसू। क्ष्माभिरज्ञानवृत्तिभिरानंदमनुभवतः आनंदभुक्चेतोमुखः प्राज्ञ इत्यादिश्रुतेः सुखमहमस्वाप्सं न किंचिदवेदिषमिति सुप्तोत्थि तस्य परामर्शोपपत्तेश्च अनयोः समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिव चाभेदः॥ ११भक्त्वे श्रुतिमवतारयति आनंदभुगि

ति अस्यार्थः आनंदो विक्षेपाभावोपलक्षित आत्मानमेव भुंक्तेऽज्ञानवृत्तिभिरवगच्छतीत्यानंदभुक् चेत आत्मस्वरूपावबोधः स एवावरणशक्तिसहितो। मुखं यस्य स चेतोमुखः प्राज्ञः प्रकृष्टे स्वयंप्रकाशे आनंदात्मनि अज्ञानावृतिरूपो बोधो यस्य स प्राज्ञः उक्तावस्थाद्वयाभावेनावगम्यमानत्वात्तृतीयः उत्त। कालीनसुखपरामर्शोपपत्तिरपि पूर्वानुभूतसुखबाहुल्यानुभवसद्भावे प्रमाणमित्याह सुखमहमिति सुखमहमस्वाप्समित्यानंदपरामर्शः न किंचिदवे दिषमित्यज्ञानपरामर्शः तथा च सुषुप्तिदशायां प्रलयकाले च प्राज्ञेश्वरावज्ञानवृत्तिभिरानंदमनुभवत एवेत्यर्थः तदानीमीश्वरगतमूलाज्ञानस्य जीवग तसंस्कारमात्रविशिष्टाज्ञानस्य च समष्टिव्यष्ट्यभिप्रायेणाभेदभानेपि वस्तुतो भेदो नासीदेतत्तद्दृष्टांतमाह अन्ययोरिति॥ ६ ॥

उक्तोपाधिद्वयद्वारेणेश्वरप्राज्ञयोरप्यभेदं दृष्टांतमुखेन दर्शयति एतदुपहितयोरिति ईश्वरस्य वनावच्छिन्नाकाशवत्प्राज्ञस्य वृक्षावच्छिन्नाकाशवच्च तथा स्थूलजलाशयोपाध्यवच्छिन्नाकाशवत् जलगतप्रतिबिंबाकाशवच्च कारणोपाध्यवच्छिन्नेश्वरस्य कार्योपाध्यवच्छिन्नप्राज्ञस्य च वस्तुतोऽभेद एवेत्यर्थः तत्र प्रमाणमाह एष इति तथा चोक्तमाचार्यैः कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते इति उपाधिद्वयावच्छिन्नौ प्राज्ञेश्वरौ सप्रपंचं निरूप्येदानीं अनवच्छिन्नं तुर्यं चैतन्यं लक्षयति वनेति यथा स्थूलवनोपाध्यवच्छिन्नाकाशापेक्षया सूक्ष्मवृक्षोपाध्यवच्छिन्नाकाशापेक्षया च महाकाशस्य तदुभयाधारतयानवच्छिन्नत्वान्महाकाशत्वं तथा कार्यकारणोपाधितदवच्छिन्नचैतन्यद्वयापेक्षया तदाधारभूतं यदनवच्छिन्नं सर्वव्या

एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिबिंबाकाशयोरिव चाभेदः एष सर्वेश्वर इत्यादिश्रुतेः वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलगतप्रतिबिंबाकाशयोर्वा आधारभूतानुपहितमहाकाशवदनयोः समष्टिव्यष्ट्यज्ञानतदुपहितचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्तुरीयमित्युच्यते शिवं शांतमद्वैतं चतुर्थं मन्यन्ते इत्यादिश्रुतेः इदमेव तुरीयं शुद्धचैतन्यं अज्ञानतदुपहितचैतन्याभ्यां तप्तायःपिंडवदविविक्तं सन्महावाक्यस्य वाच्यं विविक्तं सल्लक्ष्यमिति चोच्यते अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयं॥

॰पि चैतन्यं विशुद्धं तत्तुरीयमुच्यत इत्यर्थः अस्य चैतन्यस्य तुरीयत्वं वक्ष्यमाणविश्वाद्यपेक्षयेति द्रष्टव्यं अस्मिन्नर्थे श्रुतिं संवादयति शिवमिति आदिपदात् त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिव इत्यादिश्रुतिसंग्रहः एतदेव विशुद्धचैतन्यं पूर्वोक्तचैतन्यद्वयेन सहैकत्वविवक्षायां महावाक्यस्य वाच्यत्वं लभते भेदविवक्षायां च लक्ष्यत्वं च लभत इत्याह इदमिति त्रयाणां चैतन्यानां चैतन्येन रूपेणैकत्वेऽपि अवच्छिन्नानवच्छिन्नत्वेन रूपेण वाच्यलक्ष्यत्वे संभवत इति भावः अथेदानीं स्वप्रकाशचिद्रूपस्यात्मनः कथं कुंठितप्रकाशत्वं कथं चासंगोदासीनस्यात्मन आकाशादिप्रपंचजनकत्वमित्येतन्मूलविरोधपरिहारायाज्ञानस्य शक्ति

वे·टी·
सु·
७

आवरणविक्षेपनामकमिति आवरणशक्तिस्तावत्सच्चिदानंदस्वरूपमावृणोतीत्यावरणशक्तिः ब्रह्मादिस्थावरांतं जगज्जलबुद्बुदवन्नामरूपात्मकं वि
क्षिपति सृजतीति विक्षेपशक्तिरिति शक्तिद्वयमज्ञानस्येत्यर्थः ननु अपरिछिन्नस्य स्वप्रकाशचिद्रूपाखंडपरिपूर्णस्वरूपस्यात्मनः परिछिन्नेनानित्येन जड
तमोरूपेण व्यापकेनाज्ञानशक्तिविशेषेण कथमावरणमित्याशंक्य वस्तुतोऽज्ञानस्यात्माच्छादकत्वाभावेपि प्रमातृबुद्धिमात्रावच्छादकत्वेनाज्ञान।
स्यात्माच्छादकत्वमुपचारादुच्यत इत्याह आवरणशक्तिरिति यथाऽल्पोपि मेघोऽनेकयोजनविस्तीर्णमादित्यमंडलमवलोकयितृपुरुषदृष्टिमात्राच्छा

आवरणशक्तिः तावदल्पोपि मेघोऽनेकयोजनायतमादित्यमंडलमवलोकयितृनयनपथपिधायकतयायथाच्छा
दयतीव तथाऽज्ञानं परिछिन्नमप्यात्मानमपरिछिन्नमसंसारिणमवलोकयितृबुद्धिपथपिधायकतयाच्छादयतीव तादृ
शं सामर्थ्यं तदुक्तं घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः तथा बद्धवद्भाति यो मूढदृष्टेः स
नित्योपलब्धिस्वरूपोहमात्मेति नयावृतस्यात्मनः कर्तृत्वभोक्तृत्वसुखदुःखमोहात्मकतुच्छसंसारसंभावनापि संभा
व्यते यथा स्वाज्ञानेनावृतायां रज्ज्वां सर्पत्वसंभावना विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्ज्वौ स्वशक्त्या सर्पादिकमुद्भाव
यत्येवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्या आकाशादिप्रपंचमुद्भावयति तादृशं सामर्थ्यं॥ ११

दकत्वेनादित्यमाच्छादयतीत्युपचा
रादुच्यते तथाऽज्ञानं तु परिछिन्नमप्यज्ञानं अपरिछिन्नमात्मानंदघनं प्रमातृबुद्धिमात्राच्छादकत्वेनात्मानमाच्छादयतीत्युपचारादुच्यत इत्यर्थः अस्मिन्न
र्थे वृद्धसंमतिमाह तदुक्तमिति अनयैवावरणशक्त्यावच्छिन्नस्यात्मनः कर्तृत्वभोक्तृत्वसुखदुःखमोहात्मकत्वतुच्छसंसारसंभावनापि संभाव्यत इत्या
ह अनयेति इयमेवावरणशक्तिरात्मनो भेदबुद्धिजनकत्वेन संसारहेतुरिति भावः अत्रानुरूपं दृष्टांतमाह यथा स्वाज्ञानेनेति यदुक्तमसंगोदासीनस्यात्म
नः कथं जगत्कारणत्वमिति तन्निराकर्तुं विक्षेपशक्तिस्वरूपमाह विक्षेपशक्तिस्त्विति यथा रज्जुविषयकमज्ञानं सर्पमुत्पादयति तथात्मविषयकमज्ञानम्

७

अस्मिन्नर्थे ग्रंथांतरसंमतिं दर्शयति तदुक्तमिति ननु किमात्माचरात्मकप्रपंचस्य निमित्तकारणं उपादानकारणं वा नाद्यः दंडादिवत्स्य कार्यव्यापित्वं न स्यादात्मनः।
तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुत्या कार्यव्यापित्व श्रवणात् न द्वितीयः अचेतनस्य जडस्य प्रपंचस्य चैतन्योपादानकत्वासंभवात् उपादानत्वेन च कार्यकारण।
योरभेदेन प्रपंचस्यापि चैतन्यरूपत्वप्रसंगाद् नित्यत्वं न स्यादित्याशंक्य जडप्रपंचं प्रत्यात्मनः चैतन्यप्राधान्येन निमित्तत्वं स्वाज्ञानप्रधान्येनोपादानत्वं च संभवतीत्या
त्याह शक्तिद्वयवदिति यथायस्कांतसन्निधाने जडमयं लोहं चेष्टते तथा चैतन्यसंनिधाने जडमज्ञानं चेष्टते इत्यज्ञानविकारं प्रति चैतन्यस्य निमित्तत्वं जडाका
शादिकार्यं प्रति मायायाः साक्षादुपादानत्वेन मायाविन मायाविन ईश्वरस्यापि परंपरयोपचारादुपादानत्वं न विरुध्यत इत्यर्थः तदुक्तं चैतन्यस्य निमित्तकारणत्वे
कार्यानुप्रवेशो न स्यादिति तन्न कारणस्य कार्यानुप्रवेशनियमस्योपादानकारणविषयत्वेन निमित्तकारणविषयत्वाभावात्तत्सृष्ट्वेत्यादिश्रुतेरप्युपादानकारणप

तदुक्तं विक्षेपशक्तिर्लिंगादिब्रह्मांडांतं जगत् सृजेदित्यादीति शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधि
प्राधान्यतयोपादानं च भवति यथा लूतातंतुः स्वकार्यं प्रति स्वचैतन्यप्रधानतया निमित्तं॥ ९ परत्वात् यदप्युक्तं आत्मा न उपादानकार
णत्वे प्रपंचस्यानित्यत्वं न स्यादिति तदपि न तस्य परिणामविषयत्वेन विवर्त्तविषयत्वाभावात्प्रपंचस्य ब्रह्मविवर्तत्वाद्विवर्त्तत्वं च स्वस्वरूपापरित्यागेन स्वरूपां
तरप्रदर्शकत्वं यथा रज्ज्ववच्छिन्नचैतन्यनिष्ठाज्ञानस्य रज्जुस्वरूपापरित्यागेन सर्पादिस्वरूपांतरप्रदर्शकत्वं तथेश्वरचैतन्यनिष्ठाज्ञानशक्तेरपि चैतन्यस्य स्वरू
पापरित्यागेन आकाशादिस्वरूपांतराकारेण प्रदर्शकत्वं एतावता काशादिप्रपंचस्य नित्यत्वं न संभवति अज्ञानस्य मिथ्यारूपत्वेन तज्जन्याकाशादिप्रपंचस्यापि
मिथ्यात्वं न चैवमज्ञानस्य मिथ्यात्वे तत्प्रयुक्तबंधमोक्षयोरपि मिथ्यात्वप्रसंग इति वाच्यं इष्टापत्तेः तदुक्तं भगवता बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः गु
णस्य मायामूलत्वान्न मे मोक्षो न बंधनमिति अलमतिविस्तरेण एकस्यैवात्मनो निमित्तोपादानकारणत्वे दृष्टांतमाह यथा लूतातंत्विति यथा लूतातंतुः
स्वासद्यमानतंतुलक्षणं कार्यं प्रति स्वचैतन्यप्रधानतया निमित्तं चैतन्यसंनिधानव्यतिरेकेण जडस्य देहस्य प्रवृत्तशरीरवत्तंतुजनकत्वासंभवात्स्वशरीरप्राधा

वे॰सा॰ अशरीरस्य साक्षात्तं तु जनकत्वासंभवात्स्वशरीरप्राधान्येनोपादानं च भवति शरीरस्य साक्षात्तं तू पादानत्वेन तदवच्छिन्नचैतन्यस्याप्युपादानत्वेनोपचारात्
टी॰सु॰ एवमीश्वरस्यापि स्वचैतन्यप्रधानतया निमित्तत्वं स्वोपाधिप्रधानतयोपादानत्वं च भवतीत्यर्थः इदानीं विक्षेपशक्तिकस्या माह तमइति आकाशादेर्जडत्वात्।
८ मोगुणप्रधानविक्षेपशक्तियुक्ताज्ञानावच्छिन्नचैतन्यस्यैवाकाशादिप्रपंचजनकत्वमितिभावः अस्मिन्नर्थे श्रुतिं प्रमाणयति तस्मादेतस्मादात्मन आकाशः।
संभूतइति एतेनार्थात्सांख्यनैयायिकपक्षौ निरस्तौ शक्ते रज्ञानस्य शक्तिमत्परतंत्रत्वात्स्वतंत्रस्य तस्य केवलस्य जडस्याज्ञानस्य जगत्कारणत्वानुपपत्तेः ईक्षतेर्ना
शब्दं रचनानुपपत्तेश्च नानुमानमित्यादिन्यायनिरस्तत्वाच्च परमाणोरप्युक्तदोषग्रासत्रासानपायात् अभिन्ननिमित्तोपादानप्रतिपादकश्रुतिस्मृतिन्याय
विरोधाच्च यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयन्त्यभिसंविशंति स देवेसौम्येदमग्र आसीत् एतस्माज्जायते प्राणः मनः सर्वेंद्रियाणि च।

स्वशरीरप्रधानतयोपादानं च भवति तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशः आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी चोत्पद्यते तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादिश्रुतेः तेषु जाड्याधिक्यदर्शनात्तमःप्राधान्यं तत्कारणस्य तदानीं सत्वरजस्तमांसि कारणगुणप्रक्रमेण तेष्वाकाशादिषूत्पद्यंते एतान्येव सूक्ष्मभूतानि तन्मात्राण्यपंचीकृतानि चोच्यंते॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते बीजं मां सर्वभूतानामित्यादिश्रुतिस्मृतिभिरीश्वरस्यैव जगत्कारणत्वप्रतिपादनात् नन्वाका
शादिप्रपंचोत्पादकचैतन्यावच्छेदकाज्ञाने कुतः तमःप्राधान्यमित्याशंक्याह तेष्विति कारणगुणा हि कार्यगुणानारभंत इति न्यायादिति भावः ननु त्रिगुणात्म
कत्वादज्ञानस्य कथं तमोगुणमात्रप्राधान्येनाकाशादिजनकत्वमित्याशंक्याह तदानीमिति तदानीमुत्पत्तिवेलायां सत्वादयः त्रयोपि गुणाः तारतम्येन कारणप्र
क्रमन्यायेन तेष्वाकाशादिषु पंचभूतेषूत्तरोत्तराधिक्येन जायंत इत्यर्थः इमान्येव सूक्ष्मशरीरादिकारणभूतान्यपंचीकृतानि सूक्ष्मरूपतन्मात्राणीत्युच्यंत इ। राम॰
त्याह एतान्येवेति पंचप्राणमनोबुद्धिदशेंद्रियसमन्वितं अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनमिति वचनादप्यपंचीकृतभूतेभ्यो पंचीकृत सूक्ष्मशरीरा ८

एतेभ्य इति सूक्ष्मशरीरस्वरूपभूतानवयवानाह अवयवास्त्विति ज्ञानेंद्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि सात्विकांशादाकाशाच्छ्रोत्रमुत्पद्यते सा।
त्विकांशाद्वायोः त्वगिंद्रियं सात्विकांशात्तेजसः चक्षुः सात्विकांशाज्जलाज्जिह्वा सात्विकांशाया पृथिव्याः सकाशात् घ्राणेंद्रियं चेति क्रमेणोत्पद्यत इत्याह
एतानीति बुद्धेर्लक्षणमाह बुद्धिरिति ब्रह्मैवाहमिति निश्चयात्मिकैवांतः करणवृत्तिरेव बुद्धिरित्यर्थः मनसो लक्षणमाह मनो नामेति अहं चिद्रूपो देहो वेति संश
यात्मिकांतः करणवृत्तिरेव मन इत्यर्थः स्मरणात्मकचित्तस्य गर्वात्मकाहंकारस्य च बुद्धिमनसोरंतर्भाव इत्याह अनयोरेवेति पर्यवसन्न करणत्वेन चतुर्णामे

एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यंते सूक्ष्मशरीराणि सप्तदशावयवानि लिंगशरीराणि अवयवास्तु ज्ञानेंद्रियपंचकं
बुद्धिमनसी कर्मेंद्रियपंचकं वायुपंचकं चेति एतान्याकाशादीनां सात्विकांशेभ्यो व्यस्तेभ्यः पृथक्पृथक्क्रमेणोत्पद्यंते बुद्धि।
र्नाम निश्चयात्मिकांतःकरणवृत्तिः मनो नाम संकल्पविकल्पात्मिकांतः करणवृत्तिः अनयोरेव चित्ताहंकारयोरंतर्भावः एते
पुनराकाशादिगतसात्विकांशेभ्यो मिलितेभ्यो बुद्ध्यादय उत्पद्यंते एतेषां प्रकाशात्मकत्वात्सात्विकांशकार्यत्वं इयं बुद्धिर्ज्ञाने
द्रियैः सहिता सती विज्ञानमयकोशो भवति अयमात्माकर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभिमानित्वेनेहलोकपरलोकगा
मी व्यावहारिको जीव इत्युच्यते।

कत्वं तथाप्येकस्यैव पुरुषस्य पाचकः पाठक इत्यादिवृत्तिभेदाद्भेदवदेकस्याप्यंतःकरणस्य निश्चयसंशयस्मार १
णाहंकारविषयभेदैर्बुद्ध्यादिभेद इत्यर्थः बुद्ध्यादीनामुत्पत्तिप्रकारं दर्शयति एते पुनरिति एतेषां चतुर्णां सात्विकांशेभ्यो भूतेभ्य उत्पत्तौ निमित्तमाह एते
षामिति बुद्ध्यादीनां प्रकाशात्मकत्वात्सात्विकांशभूतकार्यत्वमित्यर्थः बुद्धेर्विज्ञानमयकोशत्वं दर्शयति इयमिति बुद्धेः सत्वकार्यत्वाज्ज्ञानेंद्रियसाहित्येन
प्रकाशाधिक्याद्विज्ञानमयत्वं आत्माच्छादकत्वाच्च कोशत्वमित्यर्थः विशुद्धबुद्धिप्रतिबिंबितचिदात्मनो जीवत्वं दर्शयति अयमिति तप्तायःपिंडवद्बुद्ध्यारो
पितं चैतन्यं वस्तुतोऽकर्तृभोक्तृनित्यानंदापरिच्छिन्नमक्रियमपि भोक्तृत्वकर्तृत्वसुखित्वदुःखित्वपरिच्छिन्नत्वक्रियावत्वाद्यभिमानेन स्वर्गादिलोकांतरगा मित्वं व्यावहारिकजीवत्वं चात्मन इत्यर्थः॥

वे॰सा॰ मनोमयकोशत्वं निरूपयति मनस्त्विति सत्त्वगुणप्रधानं मनः सत्त्वगुणांशेभ्यो जातैः श्रोत्रादिज्ञानेन्द्रियैरेव सहितं सन्मनोमयकोश इत्यर्थः अत्र तु मनस्त्वम
टी॰सु॰ त्वोपहितत्वो विकोरेच्छारूपत्वात्संकल्पविकल्पात्मकत्वेन बुद्ध्यपेक्षया जाड्याधिक्यात् मनोमयत्वं आत्माच्छादकत्वात्कोशत्वमिति भावः कर्मेन्द्रियाण्युप
९ दिशति कर्मेन्द्रियाणीति एतेषामुत्पत्तौ साधनापेक्षायामाह एतानि पुनरिति भूतानां त्रिगुणत्वेऽपि रजोगुणाव हुलेभ्यो व्यस्तभूतेभ्यो वागादीनि पृथक्पृथ
क्क्रमेणोत्पद्यन्ते भूतानां त्रिगुणत्वेऽपि रजोगुणप्रधानादाकाशात् वागिन्द्रियमुत्पद्यते रजोगुणप्रधानाद्वायोः पाणीन्द्रियं रजोगुणप्रधानादग्नेः पादेन्द्रि

मनस्तु ज्ञानेन्द्रियैः सहितं सन्मनोमयकोशो भवति कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि एतानि पुनराकाशादीनां र
जोंशेभ्यो व्यस्तभूतेभ्यः पृथक्पृथक्क्रमेणोत्पद्यन्ते वायवः प्राणोऽपानव्यानोदानसमानाः प्राणो नाम प्राग्गमनवान् नासाग्र
स्थानवर्ती अपानो नामार्वाग्गमनवान् पाय्वादिस्थानवर्ती व्यानो नाम विष्वग्गमनवान् अखिलशरीरवर्ती च उदानो नाम
कंठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः केचित्तु नागकू
र्मकृकलदेवदत्तधनंजयाख्याः पंचान्येपि वायवः ॥

९९यं रजोगुणप्रधानाज्जलात् सिलेंद्रियं रजोगुणप्रधानायाः पृथिव्याः पाय्विंद्रियमु
त्पद्यत इत्यर्थः वायूनुद्दिशति वायव इति यथोद्देशं प्राणमाह प्राणो नामेति ऊर्ध्वगमनशीलो नासाग्रस्थायी वायुः प्राण इत्यर्थः अपानस्य लक्षणमाह अ
पानो नामेति अधोगमनशील पाय्वादिस्थायी वायुरपान इत्यर्थः व्यानस्य लक्षणमाह व्यानो नामेति सर्वनाडीगमनशीलो ऽखिलशरीरस्थायी वायुर्व्यान इ
त्यर्थः उदानस्य लक्षणमाह उदानो नामेति ऊर्ध्वमुत्क्रमणशीलः कंठस्थायी वायुरुदान इत्यर्थः समानस्य लक्षणमाह समानो नामेति शरीरमध्यगतोऽन्न स॰
रसादिनेता वायुः समान इत्यर्थः प्राणादीनां वायुत्वेन रूपैकत्वेऽपि क्रियाभेदेन भेद इत्यर्थः कपिलमतानुसारिणः क्रियाभेदेनान्येऽपि पंच वायवः ॥ ९ ९

संतीतिवदंतीत्याह केचित्त्विति तेषामेवनामानिनिर्दिशति नागेत्यादिना नागेतिवेदांतिनस्तुनागादीनांप्राणादिष्वंतर्भावंवदंतीत्याह एतेषांप्राणादिष्विति।
प्राणादिवायूनामुत्पत्तौकारणापेक्षायामाह एतदिति अपंचीकृतपंचमहाभूतेभ्योरजःप्रधानेभ्यःप्राणादयोजायंतइत्यर्थः एतेषांप्राणादीनांप्राणत्वमुक्
त्वाप्राणमयत्वंआत्माच्छादकत्वात्कोशत्वंचभवतीत्याह इदमितिप्राणादीनांरजःप्रधानभूतकार्यत्वेनिमित्तमाह अस्येतिप्राणादीनांक्रियात्मकत्वाद्रज
कार्यमित्यर्थः एतेषुपंचसुकोशेषुमध्येविज्ञानमयमनोमयप्राणमयकोशानांक्रमेणज्ञानेच्छाक्रियाशक्तिभेदेनकर्तृकरणक्रियारूपत्वंदर्शयति एतेष्वि

संतीतिवदंति नागउद्गिरणकरः कूर्मउन्मीलनकरः कृकलःक्षुत्करः देवदत्तोविजृंभणकरः धनंजयःपोषणकरः तथाचोक्तंमुद्गा
रेनागआख्यातः कूर्मउन्मीलनेस्मृतः कृकलस्तुक्षुत्कारोज्ञेयोदेवदत्तोविजृंभणेनजहातिमृतंवापिसर्वव्यापीधनंजयइति ए
तेषांप्राणादिष्वंतर्भावात्प्राणादयःपंचैवेतिकेचित् एतत्प्राणादिपंचकमाकाशादिगतरजोंशेभ्योमिलितेभ्यउत्पद्यते इदं
प्राणादिपंचकंकर्मेंद्रियैःसहितंसत्प्राणमयकोशोभवति अस्यक्रियात्मकत्वेनरजोंशकार्यत्वं एतेषुकोशेषुमध्येविज्ञानम
योज्ञानशक्तिमान्कर्तृरूपः मनोमयइच्छाशक्तिमान्करणरूपःप्राणमयःक्रियाशक्तिमान्कार्यरूपःयोग्यत्वादेवमेतेषांविभा॰
गइतिवर्णयंति एतत्कोशत्रयंमिलितंसत्सूक्ष्मशरीरमित्युच्यते अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतयावनवज्ज
लाशयवद्वासमष्टिः अनेकबुद्धिविषयतयावृक्षवज्जलवद्वाव्यष्टिरपिभवति॥ १९ ति तत्रहेतुमाह योग्यत्वादिति इदमेवकोशत्र

यंसूक्ष्मशरीरमितिव्यवह्रियतइत्याह एतदिति अस्यसमष्टित्वेहेतुमाह अत्रापीति एकबुद्ध्येति चराचरप्राणिमात्रस्ययावंत्यनंतानिसूक्ष्मशरीराणिते
षांसर्वेषांसूक्ष्मशरीराणांसूत्रात्मनाहिरण्यगर्भाख्येनस्वीयैकबुद्ध्याविषयीकृतत्वात्समष्टित्वमित्यर्थः तत्रदृष्टांतमाह वनवदित्यादि अस्यैवसू॰
क्ष्मशरीरस्यव्यष्टित्वंदर्शयति अनेकेति अनेकेषांजीवानांप्रत्येकंस्वस्वलिंगशरीरस्यस्वबुद्धिविषयत्वेनानेकबुद्धिविषयतयाव्यष्टित्वमित्यर्थः तत्रदृष्टां

वे॰सा॰ मनोमयकोशत्वं निरूपयति मनस्त्विति सत्त्वगुणप्रधानं मनः सत्त्वगुणांशेभ्यो जातैः श्रोत्रादिज्ञानेंद्रियैरेव सहितं सन्मनोमयकोश इत्यर्थः अत्रानुमनसः स
टी॰सु॰ त्वोपहितत्वोविकारेच्छारूपत्वात्संकल्पविकल्पात्मकत्वेनबुद्ध्यपेक्षयाजाड्याधिक्यात्मनोमयत्वं आत्माच्छादकत्वात्कोशत्वमितिभावः कर्मेंद्रियाण्युप
९ दिशति कर्मेंद्रियाणीति एतेषामुत्पत्तौ साधनापेक्षायामाह एतानिपुनरितिभूतानां त्रिगुणात्वेपि रजोगुणाव हुलेभ्यो व्यस्तभूतेभ्यो वागादीनि पृथक्पृथ
क् क्रमेणोत्पद्यंते भूतानां त्रिगुणत्वेपि रजोगुणप्रधानादाकाशात् वागिन्द्रियमुत्पद्यते रजोगुणप्रधानाद्वायोः पाणींद्रियं रजोगुणप्रधानादग्नेः पादेंद्रि

मनत्तु ज्ञानेंद्रियैः सहितं सन्मनोमयकोशो भवति कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि एतानि पुनराकाशादीनां र
जोंशेभ्यो व्यस्तभूतेभ्यः पृथक्पृथक्क्रमेणोत्पद्यंते वायवः प्राणोऽपानव्यानोदानसमानाः प्राणो नाम प्राग्गमनवान्नासाग्र
स्थानवर्ती अपानोनाम अवाग्गमनवान्पाय्वादिस्थानवर्ती व्यानोनाम विष्वग्गमनवान् अखिलशरीरवर्ती च उदानोनाम
कंठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः समानोनाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः केचित्तु नागकू
र्मकृकलदेवदत्तधनंजयाख्याः पंचान्येपि वायवः ॥ ९ यं रजोगुणप्रधानाज्जलात् सिलेंद्रियं रजोगुणप्रधानायाः पृथिव्याः पाय्विंद्रियमु ।
त्पद्यत इत्यर्थः वायूनुद्दिशति वायव इति यथोद्देशं प्राणमाह प्राणोनामेति ऊर्ध्वगमनशीलो नासाग्रस्थायी वायुः प्राण इत्यर्थः अपानस्य लक्षणमाह अ
पानोनामेति अधोगमनशीलपाय्वादिस्थायी वायुरपान इत्यर्थः व्यानस्य लक्षणमाह व्यानोनामेति सर्वनाडीगमनशीलो खिलशरीरस्थायी वायुर्व्यान इ
त्यर्थः उदानस्य लक्षणमाह उदानोनामेति ऊर्ध्वमुत्क्रमणशीलः कंठस्थायी वायुरुदान इत्यर्थः समानस्य लक्षणमाह समानोनामेति शरीरमध्यगतान्न एस॰
रसादिनेता वायुः समान इत्यर्थः प्राणादीनां वायुत्वेन रूपैकत्वेपि क्रियाभेदेन भेद इत्यर्थः कपिलमतानुसारिणः क्रियाभेदेनान्येपि पंच वायवः ॥ ६ ९

संतीति वदंतीत्याह केचित्त्विति तेषामेव नामानि निर्दिशति नाग इत्यादिना नाग इति वेदांतिनस्तु नागादीनां प्राणादिष्वंतर्भावं वदंतीत्याह एतेषां प्राणादिष्विति। प्राणादिवायूनामुक्तसंतीकारणापेक्षायामाह एतदिति अपंचीकृतपंचमहाभूतेभ्यो रजःप्रधानेभ्यः प्राणादयो जायंत इत्यर्थः एतेषां प्राणादीनां प्राणप्रचुरत्वात्प्राणमयत्वं आत्माच्छादकत्वात्कोशत्वं च भवतीत्याह इदमिति प्राणादीनां रजःप्रधानभूतकार्यत्वे निमित्तमाह अस्येति प्राणादीनां क्रियात्मकत्वाद्रजःकार्यमित्यर्थः एतेषु पंचसु कोशेषु मध्ये विज्ञानमयमनोमयप्राणमयकोशानां क्रमेण ज्ञानेच्छाक्रियाशक्तिभेदेन कर्तृकरणक्रियारूपत्वं दर्शयति एतेष्व

संतीति वदंति नाग उद्गिरणाकरः कूर्म उन्मीलनकरः कृकलः क्षुत्कारः देवदत्तो विजृंभणाकरः धनंजयः पोषणाकरः तथा चोक्तं उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः कृकलस्तु क्षुत्कारो ज्ञेयो देवदत्तो विजृंभणे न जहाति मृतं चापि सर्वव्यापी धनंजय इति एतेषां प्राणादिष्वंतर्भावात्प्राणादयः पंचैवेति केचित् एतत्प्राणादिपंचकमाकाशादिगतरजोंशेभ्यो मिलितेभ्य उत्पद्यते इदं प्राणादिपंचकं कर्मेंद्रियैः सहितं सत्प्राणमयकोशो भवति अस्य क्रियात्मकत्वेन रजोंशकार्यत्वं एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान्कर्तृरूपः मनोमय इच्छाशक्तिमान्करणरूपः प्राणमयः क्रियाशक्तिमान्कार्यरूपः योग्यत्वादेवमेतेषां विभाग इति वर्णयंति एतत्कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः अनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिरपि भवति॥ ११

ति तत्र हेतुमाह योग्यत्वादिति इदमेव कोशत्रयं सूक्ष्मशरीरमिति व्यवह्रियत इत्याह एतदिति अस्य समष्टित्वे हेतुमाह अत्रापीति एकबुद्ध्येति चराचरप्राणिमात्रस्य यावंत्यनंतानि सूक्ष्मशरीराणि तेषां सर्वेषां सूक्ष्मशरीराणां सूत्रात्मना हिरण्यगर्भाख्येन स्वीयैकबुद्ध्या विषयीकृतत्वात्समष्टित्वमित्यर्थः तत्र दृष्टांतमाह वनवदित्यादि अस्यैव सू॰क्ष्मशरीरस्य व्यष्टित्वं दर्शयति अनेकेति अनेकेषां जीवानां प्रत्येकं स्वस्वलिंगशरीरस्य स्वबुद्धिविषयत्वेनानेकबुद्धिविषयतया व्यष्टित्वमित्यर्थः तत्र दृष्टां

उक्तसमष्ट्यवच्छिन्नचैतन्यस्य सूत्रात्मत्वादिसंज्ञां दर्शयति एतदिति तत्र हेतुमाह सर्वत्रानुस्यूतत्वादिति सर्वप्राणिलिंगशरीरेष्वनुस्यूतत्वाद्विद्यमानत्वादित्यर्थः हेत्वंतरमाह ज्ञानेच्छेति ज्ञानेच्छाक्रियाशक्तिमत्कोशत्रयोपाध्यवच्छिन्नत्वादित्यर्थः विज्ञानमयादिकोशत्रयस्य सूक्ष्मशरीरतां दर्शयन् अस्यैषेति अस्य सूत्रात्मनो हिरण्यगर्भाख्यस्य विज्ञानमयादिकोशत्रयं शरीरं अस्य स्थूलप्रपंचापेक्षया सूक्ष्मत्वादित्यर्थः अस्यैव विज्ञानमयादिकोशत्रयस्य स्वप्नत्वेयुक्तिमाह जाग्रदिति विराट्स्वरूपेणानुभूतस्थूलप्रपंचविषयवासनामयत्वात्स्वप्नत्वमस्येत्यर्थः यतः स्वप्नत्वं सूक्ष्मत्वं च अत एव स्थूलप्रपंचलयस्थानमित्यु-

एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते सर्वत्रानुस्यूतत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वादपंचीकृतपंचमहाभूताभिमानित्वाच्च अस्यैषा समष्टिः स्थूलप्रपंचापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नः अत एव स्थूलप्रपंचलयस्थानमित्युच्यते एतद्व्यष्ट्युपहितं चैतन्यं तैजसो भवति तेजोमयांतःकरणोपहितत्वात् अस्यापीयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्मत्वादिति हेतोरेव सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नः अत एव जाग्रद्वासनामयत्वात्स्थूलशरीरप्रपंचलयस्थानमिति चोच्यते एतौ सूत्रात्मतैजसौ तदानीं मनोवृत्तिभिः सूक्ष्मविषयाननुभवतः॥

च्यतेइत्यर्थः विज्ञानमयादिसमष्ट्युपाध्यवच्छिन्नचैतन्यस्य हिरण्यगर्भत्वं प्रतिपाद्येदानीं तद्व्यष्ट्युपलक्षितचैतन्यस्य तैजसत्वं निरूपयति एतदिति अत्र हेतुमाह तेजोमयेति व्यष्टिरूपं विज्ञानमयादिकोशत्रयं तैजसस्यापि सूक्ष्मं शरीरमिति दर्शयति अस्यापीति सूक्ष्मशरीरत्वे हेतुमाह स्थूलेति अस्यापि स्वप्नत्वे हेतुमाह जाग्रदिति विश्वचैतन्येनानुभूतस्थूलशरीरविषयवासनामयत्वात्स्वप्नमित्यर्थः अस्यैव सूक्ष्मशरीरस्य। स्थूलशरीरलयस्थानत्वे युक्तिमाह अत एवेति यथा पूर्वं प्राज्ञेश्वरावज्ञानवृत्तिभिः सुषुप्त्यवस्थायामानंदमनुभवतः तथा हिरण्यगर्भतैजसावपि स्वप्नावस्थायां मनोवृत्तिभिर्वासनामयान् शब्दादिविषयाननुभवत इति दर्शयति एताविति॥ ०

अस्मिन्नर्थे श्रुतिमुदाहरति प्रविविक्तेति प्रविविक्तं भुंक्त इति प्रविविक्तभुक् तैजसः तेजोंतः करणं कार्यादिभावेन परिणतं तदेव स्थूलशरीरादिहीनं यस्य स तैजसः तेजोंतः करणस्वामीत्यर्थः इहापि विज्ञानमयादिकोशत्रयस्य समष्टिरूपस्य तदवच्छिन्नसूत्रात्मनश्च व्यष्टिरूपविज्ञानमयादिकोशत्रयस्य तदवच्छिन्नतैजसचैतन्यस्य च वनवृक्षादितदवच्छिन्नाकाशादिदृष्टांतमुखेनाऽभेदं दर्शयति अत्रापीति समष्टिव्यष्ट्युपाध्योर्वनवृक्षवज्जलाशयजलवच्चाभेदः उपाधिद्वयावच्छिन्नचैतन्ययोः सूत्रात्मतैजसयोरपि वनवृक्षावच्छिन्नाकाशवज्जलाशयजलगतप्रतिबिंबाकाशवच्चाभेद इत्यर्थः सूक्ष्मशरीरोत्पत्तिप्रकरणमुपसंहरति एवमिति अथेदानीं स्थूलशरीरोत्पत्तिं निरूपयितुमुपक्रमते स्थूलभूतानि त्विति तुशब्दः पूर्वस्माद्वैषम्यं द्योतयति पंचीकृतानीति अपंची

इति प्रविविक्तभुक् तैजस इत्यादिश्रुतेः अत्रापि समष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोर्वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिंबाकाशवच्चाभेदः एवं सूक्ष्मशरीरोत्पत्तिः स्थूलभूतानि तु पंचीकृतानि पंचीकरणं त्वाकाशादिपंचस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान्पंच भागान्प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागपरित्यागेन भागांतरेषु योजनं तदुक्तम्॥

१९ कृतसूक्ष्मभूतापेक्षया स्थूलभूतानि पंचीकृतानीत्यर्थः पंचीकरणमेव प्रतिपादयितुं प्रतिजानीते पंचीकरणं त्विति पंचीकरणप्रकारमेवाह आकाशादीति अयमर्थः सृष्टिकाले सकलप्राण्यदृष्टवशादीश्वरप्रेरणया आकाशवायुतेजोबन्नान्यनाद्यविद्यासहायभूतात्परमात्मनः सकाशादनुक्रमजातानि तान्यपंचीकृतानि सूक्ष्माणि व्यवहारासमर्थानीति कृत्वा तदीयस्थौल्यापेक्षायां व्यवहर्तृप्राणिजातधर्माधर्मापेक्षयैव तान्येव भूतानि पंचीकृतानि भवंति तानि च प्रत्येकं द्वैविध्यमापद्यंते तेष्वाकाशादिषु दशसु भागेषु प्राथमिकान्च भागान्प्रत्येकं चतुर्धा समं विभज्य स्वार्धभागपरित्यागेन चतुर्णां प्रत्येकं भागांतरेषु संनिवेशेन पंचीकृतानि स्थूलानि भवंतीति॥ १ ॥ ६ ॥

वे॰ सा॰ अस्मिन्नर्थे वृद्धसंमतिमाह द्विधेति पंचीकरणस्य त्रिवृत्करणप्रतिपादकश्रुत्यंतरविरोधमाशंक्य परिहरति अस्याप्रामाण्यमिति भूतत्रयसृष्टिश्रुतौ सृष्टिप्रक्र-
टी॰ सु॰ यापूरणार्थमन्यत्र श्रुतमपि भूतद्वयमाश्रित्य भूतपंचकाभिप्रायेण भूतत्रयसृष्टिप्रतिपादनादविरोध इत्यर्थः आकाशादीनां पंच भूतानां चतुर्धा विभक्तानामन्यो-
११ न्यप्रवेशेनानुप्रवेशेन पंचीकृतानां पंचात्मकत्वाविशेषादाकाशादिव्यपदेशो न स्यादित्याशंक्य परिहरति पंचानामिति आकाशादीनां पंचानां पंचात्मकत्वे समाने

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः स्वस्वेतरद्वितीयांशैर्योजनात् पंच पंच ते इति अस्याप्रामाण्यं नाशंकनीयं त्रिवृत्करणमिति श्रुतेः पंचीकरणस्याप्युपलक्षणत्वात् पंचानां पंचात्मकत्वे समानेपि तेषु च वैशेष्यात्तद्वादः तद्वादः इति न्यायेनाकाशादिव्यपदेशः संभवति तदानीं आकाशे शब्दो भिव्यज्यते वायौ शब्दस्पर्शौ अग्नौ शब्दस्पर्शरूपाणि अप्सु शब्दस्पर्शरूपरसाः पृथिव्यां शब्दस्पर्शरूपरसगंधाश्च एतेभ्यः पंचीकृतेभ्यो भूतेभ्यः भूर्भुवःस्वर्महर्जनःतपःसत्यमित्येतन्नामकानामुपर्युपरिविद्यमानानामतलवितलसुतलरसातलतलातलमहातलपातालनामकानामधोधोविद्यमानानां लोकानां ब्रह्मांडस्य तदंतर्गतानां चतुर्विधस्थूलशरीराणां तदुचितानामन्नपानादीनां चोत्पत्तिर्भवति चतुर्विधशरीराणि तु जरायुजांडजोद्भिज्जस्वेदजाख्यानि जरायुभ्यो जातानि जरायुजानि मनुष्यपश्वादीनि अंडजानि अंडेभ्यो जातानि पक्षिपन्नगादीनि उद्भिज्जानि भूमिमुद्भिद्य जातानि कक्षवृक्षादीनि स्वेदजानि स्वेदेभ्यो जातानि यूकामशकादीनि॥ ९ पितेषु पंचभूतेषु तत्तद्विशेषानुप्रवेशात् तन्नामभिर्व्यवहारः संभवतीत्यर्थः तदानीं-

मिति यदा पंचीकृतान्याकाशादीनि तदानीं स्थूलत्वेन स्वस्वकार्योत्पादनसमर्थत्वादाकाशे ऽव्यक्तरूपेण स्थितः शब्दः अभिव्यज्यते व्यक्तो भवतीत्यर्थः उ-
क्तेभ्यो भूतेभ्यः चतुर्दशभुवनोत्पत्तिप्रकारं दर्शयति एतेभ्य इति एतेभ्यो भूतेभ्यः समुत्पन्नब्रह्मांडस्य चतुर्विधशरीराणां च तद्योग्यान्नपानादीनां चोत्पत्तिः

पूर्ववदत्रापि समष्टिव्यष्टिभेदं दर्शयति अत्रापीति चतुर्विधशरीरजातमपि शरीरमित्येकबुद्धिविषयतया वनवत्समष्टित्वं प्रत्येकं तत्तच्छरीरविषयतया
नेकबुद्धिविषयत्वात् व्यष्टित्वं च लभत इत्यर्थः अधुना भूरादिचतुर्दशभुवनांतर्गतचतुर्विधस्थूलशरीरसमष्ट्युपहितचैतन्यस्य वैश्वानरत्वापरपर्यायं वैरा
जत्वं दर्शयति एतदिति तत्र युक्तिमाह सर्वनराभिमानित्वादिति सर्वप्राणिनिकायेष्वहमित्यभिमानवत्त्वाद्वैश्वानरत्वं विविधं नानाप्रकारेण प्रकाशमानत्वाच्च
वैराजत्वं लभत इत्यर्थः ४ अस्येति अस्य विराड्चैतन्यस्यैषा पूर्वोक्ता या ब्रह्मांडांतर्गतचतुर्विधस्थूलशरीरसमष्टिरेव स्थूलशरीरमित्यर्थः अन्नविकारत्वादि

अत्रापि चतुर्विधसकलस्थूलशरीरमेकानेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः वृक्षवज्जलवद्वा व्यष्टिरपि संभवति ए
तत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडित्युच्यते सर्वनराभिमानित्वाद् विविधं राजमानत्वाच्च अस्यैषा समष्टिः स्थूलशरीरं अन्न
विकारत्वादन्नमयः कोशः स्थूलभोगायतनत्वाच्च स्थूलशरीरं जाग्रच्चेति व्यपदिश्यते एतत्व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्य
ते सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात् अस्याप्येषा व्यष्टिः स्थूलशरीरं अन्नविकारत्वादेव हेतोरन्नम
यकोशः स्थूलभोगायतनत्वाच्च जाग्रदिति चोच्यते॥

((ति अन्नविकारत्वाद्बाहुल्यादन्नमयत्वं आत्माच्छादकत्वात्कोशत्वं स्थूलशरीरादिविषयसं
युक्तसुखदुःखभोगायतनत्वाच्च स्थूलशरीरत्वं इंद्रियैरर्थोपलंभाज्जाग्रदवस्थात्वं घटत इत्यर्थः चतुर्विधं स्थूलशरीरं समष्ट्युपहितचैतन्यं सप्रपंचमभिधाये
दानीं तद्व्यष्ट्युपहितं चैतन्यं अभिधत्ते एतदिति एतेषां चतुर्विधशरीराणां या व्यष्टिः तत्तच्छरीरव्यक्तिः तदुपहितं चैतन्यं विश्व इत्युच्यत इत्यर्थः तत्र हेतुमाह
सूक्ष्मशरीराभिमानमिति सूक्ष्मलिंगशरीराभिमानमपरित्यज्य स्थूलशरीरेषु प्रविष्टत्वात् स्थूलशरीरेषु सर्वेषु प्रत्येकमहमित्यभिमानवत्त्वाद्विश्वत्वमित्यर्थ.
अस्यापीति अस्य विश्वचैतन्यस्याप्येषा तत्तच्छरीरव्यक्तिविशेषलक्षणा व्यष्टिः सैव स्थूलशरीरमित्यर्थः अत्राप्यन्नविकारत्वाद्बाहुल्यादन्नमयत्वं चैतन्याच्छाद
कत्वात्कोशत्वं इन्द्रियैरर्थोपलंभाज्जाग्रत्त्वं च क्रमे
णादर्शयति अन्नविकारत्वादिति॥

वे॰सा॰ अधुनाजाग्रदवस्थायां विश्ववैश्वानरयोः तत्तद्देवताधिष्ठितश्रोत्रादिभिः चतुर्दशभिः करणैः शब्दादिविषयग्रहणप्रकारं दर्शयति तदानीमिति अस्मिन्नर्थे श्रु-
टी॰सु॰ तिं संवादयति जागरितेति जागरितं स्थानं यस्य स जागरितस्थानः बहीरूपादौ चक्षुरादिग्राह्ये प्रज्ञा यस्य स बहिः प्रज्ञः अनयोर्विश्ववैश्वानरयोर्वनवृक्षावच्छिन्ना
१२ काशदृष्टान्तेन जलाशयगतप्रतिबिंबाकाशदृष्टान्तेन च पूर्ववदभेदं साधयति अत्रापीति स्थूलप्रपंचोत्पत्तिमुपसंहरति एवमिति स्थूलसूक्ष्मकारणप्रपंचानां

तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कवरुणाश्विभिः क्रमान्नियंत्रितेन श्रोत्रादीन्द्रियपंचकेन क्रमाच्छब्दस्पर्शरूपरसगंधान्
अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियंत्रितेन वागादीन्द्रियपंचकेन क्रमाद्वचनादानगमनविसर्गानंदांश्च चंद्रचतुर्मुखशं-
कराच्युतैः क्रमान्नियंत्रितेन मनोबुद्ध्यहंकारचित्ताख्येनांतरिंद्रियचतुष्केन क्रमात् संकल्पविकल्पनिश्चयाहंकार्यचित्तांश्च स-
र्वानेतान् स्थूलविषयाननुभवतः जागरितस्थानो बहिः प्रज्ञ इत्यादिश्रुतेः अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योः तदुपहितविश्ववै-
श्वानरयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिंबाकाशवच्च पूर्ववदभेदः एवं पंचीकृतभूतेभ्यः।
स्थूलप्रपंचोत्पत्तिः एतेषां स्थूलसूक्ष्मकारणप्रपंचानामपि समष्टिरेको महान्प्रपंचो भवति यथाऽवांतरवनानां समष्टिरेकं मह
द्वनं भवति यथा वावांतरजलाशयानां समष्टिरेको महाञ्जलाशयः॥

९ व्यष्टिभूतानां प्रत्येकं विवक्षयाऽवांतरप्रपंचत्वमभिधायेदानीं
तेषां समष्टिरूपैकं महाप्रपंचत्वं दर्शयति एतेषामिति तत्र दृष्टान्तमाह यथेति यथा धवखदिरपलाशाद्यवांतरवनानां समष्टिः समुदायविवक्षया एकं मह
द्वनं भवति यथा वा वापीकूपतडागाद्यवांतरजलाशयानां समष्टिः समुदायविवक्षया एको महाञ्जलाशयो भवति तथैतेषां स्थूलसूक्ष्मकारणावांतरप्रपं- एम॰
चानामपि समष्टिः समुदायविवक्षया एको महान्प्रपंचो भवतीत्यर्थः ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ १२

वे॰टी॰ सु॰ २०

एतदेव प्रपंचयितुं प्रतिजानीते तथाहीति जडपदार्थविषयिणीं चित्तवृत्तिमभिनीय दर्शयति अयमिति वृत्तिवृत्तिसंबंधात्प्राग्घटस्याज्ञातत्वात् अज्ञातं घटं विष
यीकृत्य प्रवृत्ता चित्तवृत्तिर्घटगताज्ञानं दूरीकुर्वाणा घटमपि भासयतीत्यर्थः अस्मिन्नर्थे वृद्धसंमतिमाह तदुक्तमिति बुद्धिश्चेत्तत्र बुद्धौ प्रतिबिंबित चिदाभास
श्च बुद्धितत्स्थचिदाभासौ द्वावेतौ बुद्धिचिदाभासौ घटं व्याप्नुतः तत्र तयोर्मध्ये धिया वृत्त्या घटाज्ञानं नश्येच्चिदाभासेन तु घटः स्फुरेदित्यर्थः अत्रानुरूपं दृष्टांतमाह।
यथेति यथांऽधकारावस्थितं घटादिकं विषयीकृत्य प्रवर्त्तमानं दीपप्रभामंडलं घटपटावरकांधकारनिरसनपुरःसरं स्वप्रभया तदपि भासयति तद्वदित्यर्थः इयता
ग्रंथजालेन प्रतिपादितस्य प्रत्यगभिन्नपरमानंदाखंडचैतन्यस्य साक्षात्कारलक्षणामखंडाकारां तत्करणवृत्तिमिति प्रतिपिपादयिषुः तत्साधनभूतश्रवणादे

तथाहि अयं घट इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरस्सरं स्वगतचिदाभासेन जडघटमपि
भासयति तदुक्तं बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटं तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् यथा दीपप्रभामंडलमंध।
कारगतं घटपटादिकं विषयीकृत्य तद्गतांधकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीति एवंभूतस्वस्वरूपचैतन्यसाक्षात्कार
पर्यंतं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेपि प्रदर्श्यंते श्रवणं नाम षड्विधलिंगैरशेषवेदांतानामद्वितीयव
स्तुनि तात्पर्यावधारणं लिंगानि तु उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि॥ ((रवश्यानुष्ठेयत्वं तेषां लक्षणानि च क्र

मेणादर्शयति एवंभूतेत्यादिना अद्वैतं वस्तु भासत इत्यंतेन ग्रंथेन एवंभूतेति एवंभूतस्योक्तश्रुतियुक्त्यनुभवैर्निरस्तसमस्तोपाधिप्रत्यगभिन्नपरमानंद
चिद्रूपस्य साक्षात्कारपर्यंतं श्रवणादीन्यनुष्ठेयानीति प्रतिजानीते तेपीति श्रवणादयोपीत्यर्थः तत्र श्रवणस्य लक्षणमाह षड्विधेति लीनमर्थं गमयतीति।
लिंगशब्दस्य व्युत्पत्तेः ब्रह्मात्मैकत्वनिश्चायकैरुपक्रमोपसंहारादिषड्विधलिंगैः सर्वेषां वेदांतवाक्यानामद्वितीयब्रह्मणि तात्पर्यनिश्चयः श्रवणमित्यर्थः एम॰
नानि च लिंगानि क्रमेणोपदिशति उपक्रमेति तथाचोक्तं उपक्रमोपसंहारावभ्यासोपूर्वता फलं अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये इति उपक्रमोपसं २०

वे·सा· अधुनाजाग्रदवस्थायां विश्ववैश्वानरयोः तत्तद्देवताधिष्ठितश्रोत्रादिभिः चतुर्दशभिः करणैः शब्दादिविषयग्रहणप्रकारं दर्शयति तदानीमिति अस्मिन्नर्थे श्रु
टी·सु· तिं संवादयति जागरितेति जागरितं स्थानं यस्य स जागरितस्थानः वहीरूपादौ चक्षुरादिग्राह्ये प्रज्ञा यस्य स वहिःप्रज्ञः अनयोर्विश्ववैश्वानरयोर्वनवृक्षावच्छिन्ना
१२ काशदृष्टांतेन जलाशयगतप्रतिविंबाकाशदृष्टांतेन च पूर्ववदभेदं साधयति अत्रापीति स्थूलप्रपंचोत्पत्तिमुपसंहरति एवमिति स्थूलसूक्ष्मकारणप्रपंचानां

तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कवरुणाश्विनिभिः क्रमान्नियंत्रितेन श्रोत्रादीन्द्रियपंचकेन क्रमाच्छब्दस्पर्शरूपरसगंधान् अग्नींद्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियंत्रितेन वागादीन्द्रियपंचकेन क्रमाद्वचनादानगमनविसर्गानंदादीन् चंद्रचतुर्मुखशंकराच्युतैः क्रमान्नियंत्रितेन मनोबुद्ध्यहंकारचित्ताख्येनांतरिंद्रियचतुष्केन क्रमात्संकल्पविकल्पनिश्चयाहंकारचित्ताख्यांश्च सर्वानेतान्स्थूलविषयाननुभवतः जागरितस्थानो वहिःप्रज्ञ इत्यादिश्रुतेः अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योः तदुपहितविश्ववैश्वानरयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिविंबाकाशवच्च पूर्ववदभेदः एवं पंचीकृतभूतेभ्यः स्थूलप्रपंचोत्पत्तिः एतेषां स्थूलसूक्ष्मकारणप्रपंचानामपि समष्टिरेको महान्प्रपंचो भवति यथाऽवांतरवनानां समष्टिरेकं महद्वनं भवति यथा वावांतरजलाशयानां समष्टिरेको महान् जलाशयः ॥

९९ व्यष्टिभूतानां प्रत्येकं विवक्षयाऽवांतरप्रपंचत्वमभिधायेदानीं तेषां समष्टिरेवैकं महाप्रपंचत्वं दर्शयति एतेषामिति तत्र दृष्टांतमाह यथेति यथा धवखदिरपलाशाद्यवांतरवनानां समष्टिः समुदायविवक्षया एकं महद्वनं भवति यथा वा वापीकूपतडागाद्यवांतरजलाशयानां समष्टिः समुदायविवक्षया एको महान् जलाशयो भवति तथैतेषां स्थूलसूक्ष्मकारणावांतरप्रपं राम·
चानामपि समष्टिः समुदायविवक्षया एको महान्प्रपंचो भवतीत्यर्थः ॥ १२

अखंडचैतन्यप्रतिपादकस्य तत्त्वमसीति वाक्यस्यार्थं सप्रपंचमभिधायेदानीं यजुर्वेदानुभववाक्यार्थं वर्णयति इत्याह अथाधुनेति गुरुमुखान्नकूलः तत्त्वमस्या-
दिवाक्यश्रवणादहाद्यहंकाराद्यन्तजडपदार्थसकलदृश्यविलक्षणप्रत्यगात्मनः शुद्धेन परमात्मना सहैकत्त्वबोधानंतरं कश्चिदधिकारी लब्धावसरः सर्वोपाधिविनि-
मुक्तं सच्चिदानंदैकरसमनुभवेन जिज्ञासुराचार्योपदिष्टमहं ब्रह्मास्मीति वाक्यार्थमनुस्मरन्स्वात्मानंदैकरसमनुभवतीत्यर्थः तत्प्रकारमेवाह एवमित्यादिना एवं
संक्षेपेण प्रमाणलक्षणप्रकारेणाधिकारिणः चित्तवृत्तिरुदेतीति संबंधः कदेत्यपेक्षायामाह आचार्येणेति आचार्येण विषयेऽसंगे निष्कलचैतन्ये शशशृंगा-
यमानोऽविद्याहंकारादिशरीरांतं मिथ्यापदार्थमध्यारोप्य तदपवादपुरःसरं तत्त्वंपदार्थौ शोधयित्वा तत्त्वमसीति वाक्येन जहदजहल्लक्षणया विरुद्धांशपरित्या-
गेनाखंडार्थचैतन्ये ज्ञाते सतीत्यर्थः किंविषयिणी चित्तवृत्तिरुदेतीत्याशंक्य निवारयति अहमिति अहं प्रत्यगात्मायं ब्रह्मास्मीत्यन्वयः ब्रह्मानित्यत्वशंकां-

अथाधुनाऽहं ब्रह्मास्मीत्यनुभववाक्यार्थो वर्ण्यते एवमाचार्येणाध्यारोपापवादपुरःसरं तत्त्वंपदार्थौ शोधयित्वा वाक्येनाखंडा-
र्थेऽवबोधितेऽधिकारिणः अहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानंदानंताद्वयं ब्रह्मास्मीत्यखंडाकाराकारिता चित्तवृत्तिरुदे-
ति सा तु चित्प्रतिबिंबसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते॥ ९ नित्येकारेति नित्येति शुद्धपदे-

नाऽविद्यादिदोषराहित्यं बुद्धपदेन स्वप्रकाशस्वरूपत्वेन मुक्तपदेन सर्वोपाधिराहित्यं सत्यपदेनाविनाशिस्वभावत्वं परमानंदपदेन वैषयिकमनुष्यानंदादिचतुर्मुख-
ब्रह्मानंदपर्यंतानां कर्मजन्यत्वेन सातिशयत्वेन क्षयिष्णुत्वेन च तुच्छत्वात्तेभ्यो विलक्षणं निरतिशयानंदस्वरूपत्वं प्रतिपाद्यते अनंतपदेन घटादिवत्परिच्छेदराहित्ये-
न देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वं बोध्यते अद्वयमिति नानात्वनिषेधेन एकत्वं बोध्यत इत्यर्थः ननु यथा दीपप्रभादित्यमंडलं न व्याप्नोति न च प्रयोजनमस्ति त-
था नित्यशुद्धस्वप्रकाशमात्मानं जडचित्तवृत्तिरेकं कथं विषयीकरोतीति किं प्रयोजनं चेत्याशंक्याह सा त्विति सा चित्तवृत्तिर्न शुद्धब्रह्मविषयिणी किं त्वज्ञानविशिष्टप्र-
त्यगभिन्नपरब्रह्मविषयिणी सा च चैतन्यप्रतिबिंबसंवलिता सती चैतन्यगतमज्ञानं निवर्तयति तत्सा चैतन्यावरकाज्ञाननिवृत्तिरेव प्रयोजनमित्यर्थः॥ ९ ॥

नन्वधिकारिणः तत्त्वमस्यादिवाक्यश्रवणोसन्नाऽखंडचैतन्यवृत्त्यातदाश्रिताज्ञाननिवारितेपितत्कार्यस्यसकलचराचरात्मकप्रपंचस्यप्रसक्ततयाभासमानत्वात्का
थमद्वैतसिद्धिरित्याशंक्यकारणाज्ञाननाशेतत्कार्यसकलप्रपंचनाशादद्वैतसिद्धिरित्येतत्सदृष्टांतमाहयथेतिनन्वज्ञाननाशेनतत्कार्यप्रपंचस्यनाशोस्तुतथाप्यखं
डाकारचित्तवृत्तेरनिवृत्तेरद्वैतहानिरित्याशंक्याह तदंतर्भूतेति अखंडाकारवृत्तेरपिअज्ञानतत्कार्यान्तर्भूतत्वात्तन्निवृत्तौतन्निवृत्तेर्नाद्वैतहानिरित्यर्थः ननुतथा
प्यऽखंडाकारवृत्तिप्रतिविंवितचैतन्याभासस्यसत्त्वात्त्वात्कथमद्वैतसिद्धिरित्याशंक्याह तत्रेति वृत्तिनिवृत्तौतत्प्रतिविंवितचैतन्यस्यविंवावभासनासमर्थत्वाद्वृत्त्यु
पाधिवाधेनतत्प्रतिविंवचैतन्यमपिचैतन्यमात्रतयावशिष्यतेदर्पणोपाधिविगमेतत्प्रतिविंवितमुखाभासस्यविंवभूतमुखमात्रतावशेषवदित्यर्थः अ
यंभावः शोधिततत्त्वंपदार्थस्याधिकारिणः तद्धिजृंभितगुरुशास्त्रादिभ्यः तत्त्वमसीत्युपदेशेनअहंनित्यशुद्धवुद्धमुक्तसत्यस्वभावपरमानंदानंताद्वयाखंडब्रह्मा

यथापटकारणातंतुदाहेयटदाहवदखिलकारणोऽज्ञानेवाधितेसतितत्कार्यस्याखिलस्यवाधितत्वात्तदंतर्भूताखंडाकाराकारिताचि
त्तवृत्तिरपिवाधिताभवति तत्रप्रतिविंवितंचैतन्यमपियथादीपप्रभाऽदित्यप्रभावभासनासमर्थारसतीतयाभिभूताभवतितथास्व

स्मीतिचित्तवृत्तिरुदयमासादयतितदानीमेवतस्यामभिव्यक्ताखंडचैतन्यवलेनतत्परिपीडिताज्ञाननाशोभवतितदानींतत्कार्यस्य। ९ स्वयंप्रकाशमान
सर्वस्यनाशादभिव्यंजकवृत्तिरपिस्वयमेवकतकरजोवदारुमथनजनिताग्निवदुदरस्थदुष्टजलशांत्यर्थेपीतनष्टजलवच्चनष्टाभवतितदानींतद्गताभासोपि
स्वोपाधिभूतवृत्तिनाशात्स्वप्रकाशात्मावभासमानासमर्थतयादर्पणविगमेतदुपाधिकस्यस्वाधिष्ठानमुखमात्रत्ववदधिष्ठानमात्रोभवतीतिवेदान्तसिद्धां
तरहस्यमिति अत्रजस्यानुभवः लोकाश्चभांतिपरमेमयिमोहजन्याःस्वप्नेंद्रजालमरुनीरसमाविचित्राः स्युस्थानकालइहनस्युरलंविशुद्धप्रसन्नसुखाब्धि
परमामृतचित्तवृत्तौ १ मत्तःपरंनखलुविश्वमथापिभातिमध्येचपूर्वमपरंखपुष्पंगतुल्यं मायोस्यशास्त्रगुरुवाक्यसमुत्थवोधभानुप्रभाविलसतेक्वगतंनजाने २ नि
रतिशयसुखाब्धौस्वप्रकाशेपरेस्मिन्कथमिदमविवेकादुत्थितंसर्पफणीव क्वनुगतमधुनातद्देशिकोवास्तुतिर्वापरमविमलवोधेभ्युत्थितेहंनजाने ॥ ३ ॥

तदेतत्सर्वं मनसि निधायोपसंहरति प्रत्यगभिन्नेति ननु मनसैवानुद्रष्टव्यं मनसैवेदमवाप्तव्यं दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः बुद्ध्यवलोकनसाध्ये
स्मिन्वस्तुन्यस्तमिता यदि बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भवेत्यादिश्रुतिस्मृतीनां यतो वाचो निवर्तन्ते अप्राप्य मनसा सह यन्मनसा न मनुते अन्यदेव तद्विदि
तादथो अविदितादधीहि अविज्ञातं विजानतां विज्ञातमविजानतां अनाशिनोऽप्रमेयस्य यद्विज्ञातं त्वया विप्रपन्न विज्ञातमात्मना ताभ्यामन्यस्तं विद्धि यद्ध्येयं त
ज्जडमित्यादिश्रुतिस्मृतीनां परस्परविरोधमाशंक्य परिहरति एवमिति एवमुक्तप्रकारेण अज्ञातचैतन्यस्य वृत्तिव्याप्यत्वांगीकारेण फलव्याप्यत्वे प्रतिषिद्धे स
तीत्यर्थः तदेवाह वृत्तिव्याप्यत्वेति अंतःकरणवृत्तिरावरणनिवृत्त्यर्थमज्ञानावच्छिन्नं चैतन्यं व्याप्नोतीत्येतद्वृत्तिव्याप्यत्वमंगीक्रियते आवरणभंगानंतरं स्व

प्रत्यगभिन्न परब्रह्मावभासनानर्हतया तेनाभिभूतं सत्त्वोपाधिभूताखंडवृत्तेर्बोधितत्वाद्दर्पणाभावे मुखप्रतिबिंबस्य मुखमा
त्रत्ववत्प्रत्यगभिन्नपरब्रह्ममात्रं भवति एवं च सति मनसैवानुद्रष्टव्यं यन्मनसा न मनुत इत्यनयोः श्रुत्योरविरोधः वृत्तिव्याप्यत्वां
गीकारेण फलव्याप्यप्रतिषेधप्रतिपादनात् तदुक्तं फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितं ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपे
क्षितेति स्वयंप्रकाशमानत्वान्नाभास उपयुज्यत इति जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति ॥ ९यंप्रकाशमानं चैतन्यं फलचैत

न्यमित्युच्यते तस्मिन्फलचैतन्ये निष्फला काचिद्वृत्तिर्न व्याप्नोति आवरणभंगस्य प्रागेवज्ञातत्वेन प्रयोजनाभावादित्यर्थः अस्मिन् ग्रन्थे ग्रंथांतरं संवादयति त
दुक्तमिति वृत्तिप्रतिबिंबितचैतन्याभासस्यापि फलचैतन्यप्रकाशकत्वेनेस्तत्रापि संमतिमाह स्वयमिति इदानीं जडपदार्थविषयिकचित्तवृत्तेर्ब्रह्माकारवृत्त्य
पेक्षया वैलक्षण्यं दर्शयितुमाह जडपदार्थेति अहं ब्रह्मास्मीत्यज्ञानावच्छिन्नब्रह्माकाराचित्तवृत्तिस्तदावरकमज्ञानमात्रं निवर्तयति ब्रह्म तु स्वप्रकाश
मानत्वात्स्वयमेव प्रकाशते न तु वृत्तिप्रतिबिंबितचिदाभासेन चैतन्यं प्रकाश्यते तत्र तस्यासामर्थ्यात् अयं घट इति घटाकाराकारितचित्तवृत्तिस्तु घटावच्छिन्नचै
तन्यावरकमज्ञानं निवर्तयन्निवर्त्तमाना स्वप्रतिबिंबितचिदाभासेन जडं घटमपि प्रकाशयति अतः ततो विशेषोऽस्तीत्यर्थः ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

वे.टी.
सु.
२०

एतदेव प्रपंचयितुं प्रतिजानीते तथाहीति जडपदार्थविषयिणीं चित्तवृत्तिमभिनीय दर्शयति अयमिति वृत्तिवृत्तिसंबंधात्मा घटस्याज्ञातत्वात् अज्ञातं घटं विषयीकृत्य प्रवृत्ता चित्तवृत्तिर्घटगताज्ञानं दूरीकुर्वाणा घटमपि भासयतीत्यर्थः अस्मिन्नर्थे वृद्धसंमतिमाह तदुक्तमिति बुद्धिश्च तत्र बुद्धौ प्रतिबिंबितचिदाभासश्च बुद्धितत्स्थचिदाभासौ द्वावेतौ बुद्धिचिदाभासौ घटं व्याप्नुतः तत्र तयोर्मध्ये धिया वृत्त्याख्ययाऽज्ञानं नश्येच्चिदाभासेन तु घटः स्फुरेदित्यर्थः अत्रानुरूपं दृष्टांतमाह। यथेति यथाऽन्धकारावस्थितं घटादिकं विषयीकृत्य प्रवर्तमानं दीपप्रभामंडलं घटपटावरकांधकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीत्यर्थः इयता ग्रंथजालेन प्रतिपादितस्य प्रत्यगभिन्नपरमानंदाखंडचैतन्यस्य साक्षात्कारलक्षणामखंडाकारां तत्करणवृत्तिं प्रतिपिपादयिषुः तत्साधनभूतश्रवणादे

तथाहि अयं घट इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरस्सरं स्वगतचिदाभासेन जडघटमपि भासयति तदुक्तं बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटं तत्राज्ञानं धियानश्येदाभासेन घटः स्फुरेत् यथा दीपप्रभामंडलमंधकारगतं घटपटादिकं विषयीकृत्य तद्गतांधकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीति एवंभूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यंतं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेपि प्रदर्श्यंते श्रवणं नाम षड्विधलिंगैरशेषवेदांतानामद्वितीयवस्तुनि तात्पर्यावधारणं लिंगानि तु उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि॥ ११ रवश्यानुष्ठेयत्वं तेषां लक्षणानि च क्रमेण दर्शयति एवंभूतेत्यादिना अद्वैतं वस्तु भासत इत्यंतेन ग्रंथेन एवंभूतेति एवंभूतस्योक्तश्रुतियुक्त्यनुभवैर्निरस्तसमस्तोपाधि प्रत्यगभिन्नपरमानंदचिद्रूपस्य साक्षात्कारपर्यंतं श्रवणादीन्यनुष्ठेयानीति प्रतिजानीते तेपीति श्रवणादयोपीत्यर्थः तत्र श्रवणस्य लक्षणमाह षड्विधेति लीनमर्थं गमयतीति। लिंगं शब्दस्य वस्तुस्यते अह्नात्मैकत्वनिश्चायकैरुपक्रमोपसंहारादिषड्विधलिंगैः सर्वेषां वेदांतवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिश्चयः श्रवणमित्यर्थः एम. तानि च लिंगानि क्रमेणोपदिशति उपक्रमेति तथाचोक्तं उपक्रमोपसंहारावभ्यासोपूर्वता फलं अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णय इति उपक्रमोपसं २०

प्रकरणप्रतिपाद्यस्येति तदुदाहरन् दर्शयति यथेति एकमेवाद्वितीयमित्युपक्रम्य ऐतदात्म्यमिदं सर्वमिति प्रतिपादनमुपक्रमोपसंहारावित्यर्थः अभ्यासस्यल-
क्षणमाह पौनःपुन्यमिति अत्रापि श्रुतिमुदाहरति यथेति अपूर्वत्वस्य लक्षणमाह प्रमाणान्तरेति तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतिभिरुपनिषन्मात्रवेद्य-
त्वेन प्रतिपादनाद्ब्रह्मणोऽपूर्वत्वमित्यर्थः अथवा स्वप्रकाशत्वेन स्वव्यवहारे स्वातिरिक्तप्रमाणानपेक्षत्वात् ब्रह्मणोऽपूर्वत्वमित्यर्थः क्रमप्राप्तस्य फलस्य लक्षणमा-
ह फलं त्विति अत्रानुरूपमुदाहरणमाह आचार्यवानित्यादि श्रवणादिसाधनानां ब्रह्मात्मैकत्वविज्ञानं प्रयोजनं ब्रह्मज्ञानस्य तु तत्प्राप्तिः फलं ब्रह्मविद्ब्रह्मैव

प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ यथा छान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयव-
स्तुनः एकमेवाद्वितीयमित्यादौ ऐतदात्म्यमिदं सर्वमित्यन्ते च प्रतिपादनं प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपाद-
नमभ्यासः यथा तत्रैवाद्वितीयवस्तुनो मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनं प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणा-
न्तराविषयीकरणमपूर्वता यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणं फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनु-
ष्ठानस्य वा तत्र तत्र च श्रूयमाणं प्रयोजनं यथा तत्राचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इत्यद्विती-
यवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः यथा तत्रैवोत तमादेशमप्राक्ष्यो येना-
श्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति ॥

११ भवति तरति शोकमात्मविदित्यादिश्रुतेरित्यर्थः पंचमलिंगस्यार्थवादस्य लक्ष-
णमाह प्रशंसनमिति प्रकरणप्रतिपाद्याद्वितीयब्रह्मस्वरूपस्तावकवाक्यमर्थवाद इत्यर्थः अत्रापि श्रुतिमाह उत तमादेशमप्राक्ष्य इत्यादि येनाश्रुतं
श्रुतं भवति येन च सकलप्रपंचाधिष्ठानब्रह्मस्वरूपश्रवणेनाश्रुतं प्रपंचजातमपि श्रुतं भवति येन ब्रह्मज्ञानेनाज्ञातं सर्वं जगत् ज्ञातं भवति येन ब्रह्मसाक्षा-
त्कारेण साक्षात्कृतं साक्षात्कृतं भवति ब्रह्मणः सर्वतः संप्लुतोदकस्थानीयत्वादित्यर्थः ॥ ॥ ॥

अवशिष्टाया उत्पत्तेर्लक्षणमाह प्रकरणेति तामुदाहरति यथेति मृद्विकारेषु घटादिषु विकारनामधेययोर्वाचारंभणमात्रत्वेन यथा मृन्मयत्वमेवावशिष्यते नान्यत्तथा चिद्विवर्तस्य प्रपंचस्य गिरिनदीसमुद्रात्मकविकारनामधेययोर्वाचारंभणमात्रत्वाच्चिन्मात्रमेवावशिष्यते रज्जुविवर्तस्य सर्पस्य रज्जुमात्रावशेषवदित्यर्थः श्रवणनिरूपणानंतरं तदुत्तरांगस्य मननस्य लक्षणमाह मननं त्विति षड्विधलिंगतात्पर्यपूर्वकं श्रुतस्याद्वितीयब्रह्मणो वेदांताऽविरोधिनीभिर्युक्तिभिर्निरंतरमनुचिंतनं मननमित्यर्थः निदिध्यासनस्य लक्षणमाह विजातीयेति विजातीयदेहादिबुद्ध्यन्तजड पदार्थविषयकप्रत्ययनिराकरणेन सजा

अद्वितीयवस्तुप्रशंसनं प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः यथा तत्र सौम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादावद्वितीयवस्तुसाधने विकारस्य वाचारंभणमात्रत्वे युक्तिः श्रूयते मननं तु श्रुतस्याद्वितीयवस्तुनो वेदांतार्थानुगुणयुक्तिभिरनवरतमनुचिंतनं विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यासनं समाधिः द्विविधः सविकल्पको निर्विकल्पकश्चेति तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पभेदलयानपेक्षयाद्वितीयवस्तुनि ॥

१ तीयाद्वितीयवस्तुविषयकप्रत्ययप्रवाहीकरणं निदिध्यासनमित्यर्थः व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावे सति चित्तस्यैकाग्रतापरिणामः समाधिः सच द्विविन्द्वाविध इत्याह सविकल्पको निर्विकल्पकश्चेति तस्य लक्षणमाह तत्रेति तत्र तयोः सविकल्पकनिर्विकल्पकयोर्मध्ये सविकल्पकोऽपि द्विविधः अहं ब्रह्मास्मीति शब्दानुविद्धतयाऽद्वितीये वस्तुनि चित्तवृत्तेरवस्थानमित्येकः द्वितीयस्तु ज्ञातृज्ञानज्ञेयत्रिपुटीविलयानपेक्षयाहं ब्रह्मास्मीति दृश्यानुविद्धतयाऽद्वितीयवस्तुन्यविच्छेदेन चित्तवृत्तेरवस्थानमित्यर्थः ननु भक्षितेपि लशुने न शांतो व्याधिरिति न्यायेनोक्तसविकल्पकसमाध्योः सकलभेदनिराकरणाय प्रवर्तमानयोरपि ज्ञात्रादिभेदविषयत्वेनाद्वैतवस्तुमात्रभानं

[illegible]

तदेतितदासविकल्पकसमाध्यनुभवकालेज्ञात्रादिभेदप्रतीतावप्यद्वैतंवस्तुभासतएवसुवर्णमयकुंडलादिभानेसुवर्णभानवन्मृण्मयघटादिभानेमृद्भा
नवच्चघटादिभानस्यवाचारंभणमात्रत्वात्ज्ञात्रादिभानस्यापिवाचारंभणमात्रत्वादद्वैतमेववस्तुभासतइत्यर्थः यद्वासर्वंखल्विदंब्रह्मएतदात्म्यमिदंसर्व
मित्यादिश्रुतिबलात्सर्वमहमितिगिरिनदीसमुद्रात्मकंसर्वंजगत्स्वाभिन्नसच्चिदानंदब्रह्मत्वेनानुभूपतस्यदग्धपटन्यायेनप्रपंचभानेप्यद्वैतंसच्चिदानंदल
क्षणंवस्तुभासतएवइत्यर्थः तदुक्तंभगवतावासुदेवःसर्वमितिसमहात्मासुदुर्लभइतिमूलकारोप्यस्मिन्नर्थेग्रंथांतरसंमतिंदर्शयतितदुक्तमिति ॐमितियत्सर्वंब्र
ह्मतदेवाहमित्यन्वयः किंतदित्याह दृशिस्वरूपमितिदृशिःदृष्टिःतस्याःरूपंदृष्टृत्वंतयस्यपरमात्मस्वरूपस्यतद्दृशिस्वरूपंसाक्षिस्वरूपमित्यर्थः तदुक्तंभगवता
उपद्रष्टानुमंताचभर्ताभोक्तामहेश्वरःपरमात्मेतिचाप्युक्तोदेहेस्मिन्पुरुषःपरइतिपुनःकिंरूपंततगगनोपमंगगनेउपमादृष्टांतोयस्यतद्गगनोपमंगगनवन्नि

तदाकाराकारितायाःचित्तवृत्तेरवस्थानंतदामृण्मयघटादिभानेमृद्भानवत्तद्वैतभानेप्यद्वैतवस्तुभासते तदुक्तंदृशिस्वरूपंगग
नोपमंपरंसकृद्विभातंत्वजमेकमक्षरं अलेपकंसर्वगतंयदद्वयंतदेवचाहंसततंविमुक्तॐमिति ॥

र्लेपस्वरूपमित्यर्थःतथाचभगव
द्वचनंयथासर्वगतंसौक्ष्म्यादाकाशंनोपलिप्यते सर्वत्रावस्थितोदेहेतथात्मानोपलिप्यतइतियद्वागगनोयमंगगनवदमूर्तस्वरूपमित्यर्थःआकाशशरीरंब्र
ह्मेतिश्रुतेःपुनःकिंभूतंसकृद्विभातंसकृदेकदैवविभातंसर्वदैकस्वरूपेणभासमानंचंद्रादिप्रकाशवन्नावृद्धिक्षयशीलमित्यर्थःपुनःकिंरूपंअजंजन्मरहितंएवं
निरस्तसर्वोपाधिभेदंअक्षरंविनाशधर्मरहितत्वेनकूटस्थस्वरूपमित्यर्थःतथाचभगवानाहक्षरःसर्वाणिभूतानिकूटस्थोऽक्षरउच्यतइतिअलेपकंअसंगत्वाद
विद्यादिदोषरहितमित्यर्थः असंगोह्ययंपुरुषइतिश्रुतेःसर्वगतंसर्वत्रब्रह्मादिस्थावरांतेषुभूतेषुगतंव्याप्तंअद्वयंसजातीयविजातीयस्वगतभेदराहित्येन।
द्वितीयरहितंसततंविमुक्तमितिसर्वदाकार्यकारणात्मकसर्वोपाधिविनिर्मुक्तत्वेनसततमेकरूपमित्यर्थः तथाचभागवतेबद्धोमुक्तइतिव्याख्यागुणतोमेनव।
स्तुतइतितथाचएतादृशंनिरतिशयानंदंपरंब्रह्मतदेवाहमितिभावयतोनिषेधप्रतियोगित्वेनतत्तदुपाधिभानात्तत्प्रयुक्तभेदभानेप्यद्वैतंभासतएवेत्यर्थः

कैटी सू॰ २२

समाधिस्वरूपमाह निर्विकल्पकस्त्विति अयं च द्विविधः चिरकालाभ्यस्तापटुतरसविकल्पकसमाध्यनुभवजनितसंस्कारसहकृतायाः चित्तवृत्तेर्ज्ञात्रादित्रिपुटीलयपूर्वकमद्वैतवस्तुन्येकभावनात्मकः प्रथमः एतन्निर्विकल्पकसमाध्यभ्यासपाटवेनलुप्तसंस्कारतया ज्ञात्रादित्रिपुटीलयपूर्वकमखंडाकाराकारितायाः चित्तवृत्तेर्विनापि स्वस्फूर्तिं केवलचिदात्मनावस्थानात्मको द्वितीयः तत्र द्वितीयपक्षमभिप्रेत्याह ज्ञातृज्ञानादीति नन्वेवं समाधिसुषुप्त्योर्विशेषाभावेन वृत्त्यभानादभेदमाशंक्य परिहरति तत्र युक्तिमाह उभयत्रेति समाधिसुषुप्त्योरित्यर्थः तत्सद्भावेति समाधावज्ञायमानवृत्तिसद्भावात् सुषुप्तौ वृत्त्यभावाच्च न तयोरभेदोपपत्तेरित्यर्थः उक्तसमाधेः

निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पभेदलयापेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानं तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवत् अद्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमेवभासते ततश्चास्य सुषुप्तेश्चाभेदशंका न भवति उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेण तयोर्भेदोपपत्तेः अस्यांगानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः।
शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः आसनानि करचरणादिसंस्थानविशेषलक्षणानि पद्मकस्वस्तिकादीनि ॥०

साधनापेक्षायामाह अस्येति तानि च साधनानि क्रमेणोद्दिशति यमेति यमाद्यष्टांगानि समाधेरंतरंगसाधनानीत्यर्थः प्रथमयमस्य लक्षणमाह तत्रेति तेषु यमाद्यष्टांगेषु मध्ये अहिंसादयः पंच यमा अवश्यानुष्ठेया इत्यर्थः तदनंतरं नियमानाह शौचेति शौचादयः पंच नियमा इत्यर्थः आसनं लक्षयति आसनानीति कर- राम
चरणादिसंस्थानविशेषलक्षणानि पद्मकस्वस्तिकादीनि आसनानि ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥ ९ २२

प्राणायामलक्षणमाह रेचकेति इडया पूरयेद्वायुं मुंचेद्दक्षिणया निलं यावच्छ्वासं समासीनः कुंभयेत्तं सुषुम्णायां यदा योगी पद्मासनेऽउपविश्य योगमभ्यस्यति तदा।
गुल्फाभ्यां गुदमूलं निष्पीड्य खेचरीमुद्रासहायेन प्राणधारणया सुषुम्णामार्गेण मूलाधारात्कुंडलनीमुत्थाप्य स्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञानिर्वाण
ख्यषट्चक्रभेदक्रमेण सहस्रदलकमलकर्णिकायां विद्यमानपरमात्मना सह प्राणं संयोज्य तत्रैव चित्तं निर्वातदीपवन्निश्चलं कृत्वा स्वात्मानंदरसं पिबती।
सेतत्प्राणायामफलं स च द्विविधः अगर्भः सगर्भश्चेति मुंचेद्दक्षिणया वायुं मात्राहीनमनन्यधीः पूरयेद्वामया तद्वत्कुंभयेच्च सुषुम्णया यावच्छ्वासं जितश्
श्वासो भवेन्मासाज्जितेन्द्रिय इति वचनात् प्रणवोच्चारणराहित्येन कृतरेचकपूरककुंभकक्रमेण प्राणनिरोधोऽगर्भप्राणायामः रेचयेत् षोडशेनैव तद्द्विगुणेन

रेचकपूरककुंभकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः ॥

पूरयेत् कुंभयेच्च चतुःषष्ट्या प्रणवार्थमनुस्मरन् इति वचनात् षोडशप्रणवं मनसा जपन् दक्षिणया वायुं विरेच्य द्वात्रिंशत्संख्याकं प्रणवं मनसा समुच्चरन् वा
मया वायुमापूर्य चतुःषष्टिसंख्याकं प्रणवं मनसा जपन् तदर्थं च अकारोकारमकारार्द्धमात्रात्मकसार्धत्रिमात्रात्मकसार्धत्रिवलयाकारकुंडलनीरूपं चि
दानंदकंदं च मूलाधारादिब्रह्मरंध्रांतमनुसंदधत् सुषुम्णया चित्तमर्पितदेकप्रवणं कुर्वन् यावच्छ्वासं कुंभयेत् तदुक्तमाचार्यैः षोडशतद्द्विगुणचतुष्षष्टि।
मात्राणि च तानि चक्रमशः रेचकपूरककुंभकभेदैः त्रिविधः प्रभंजनायामः इति प्राणायामप्रकारः क्रमप्राप्तं प्रत्याहारं निरूपयति ॥ ९ ॥ ९ ॥

वे·टी·
सु·
२३

इंद्रियग्रहणमिति श्रोत्रादीनामिंद्रियाणां स्वविषयेभ्यः शब्दादिभ्यः सकाशात्साषाणोपरिप्रयुक्तः शरसंघातः तद्वत्सावर्तनं प्रत्याहारः नन्विंद्रियाणां स्वस्ववि षयेभ्यो निवर्तनं प्रत्याहार इत्युक्तं तन्न संभवति शब्दादिविषयाणां सुखसाधनत्वेन वैषयिकसुखव्यतिरिक्तनिरतिशयानंदसद्भावे प्रमाणाभावाद्वैराग्य गर्भाधिमृतभोगस्येश्वरेणापि त्यक्तुमशक्यत्वादिति चेत् न मूढैः कर्मजडैर्विषयलंपटैः त्यक्तुमशक्यत्वेपि मुमुक्षुभिर्दांतैरंतःकरणेन संसारविघटकत्वदर्शिना विषय दोषदर्शनेन तुच्छीकृतशब्दादिविषयप्रपंचेन पुरुषोत्तमेन पुरीषवत्त्यक्तुं शक्यत्वात् अन्यथा संन्यास एव लुप्येत तस्मात् न्यासमेषां तपसामतिरिक्तमाहुः। एतमेव लोकमभीप्संतः प्रव्राजिनः प्रव्रजंति एतत्सर्वेभ्यः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् न कर्मणा न प्रजया धनेन त्यागेनैके नामृतत्वमानशुः ब्रह्म

इंद्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः॥१०

चर्यादेव प्रव्रजेत् यदहरेव विरजेत् तदहरेव प्रव्रजेत् वनाद्गृहाद्वा सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया प्रव्रजंत्य कृतोद्वाहाः परं वैराग्यमाश्रिताः प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः ब्रह्मावाप्त्यै तत्त्यागमीप्संतीति श्रुतेर्बलात् इत्यादिश्रुतिस्मृतिभिः तथा आ नंदो ब्रह्मेति व्यजानात् एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति एषोस्य परमानंदः आत्मैवानंदः यदेष आकाश आनंदो न स्यात् आनंदाद्ध्येव खल्वित्यादिश्रुतिभिश्च नित्यात्मसुखस्य प्रतिपादितत्वाच्छब्दादिवैषयिकसुखव्यतिरिक्तनित्यनिरतिशयानंदसद्भावे प्रमाणाभावादित्येतदपि निरस्तं वेद २३

संप्रति धारणां लक्षयति अद्वितीयवस्तुनीति सर्वेषां बुद्धिसाक्षितया विद्यमाने वस्तुनि चित्तनिक्षेपणं धारणा इत्यर्थः धारणापाटवाभावेन चित्तस्थैर्याभावादद्वितीयवस्तुनि विच्छिद्य विच्छिद्य चित्तवृत्तिप्रवाहीकरणं ध्यानमित्याह तत्रेति समाधिरुक्त एव सविकल्पकः स्पष्टं व्यत्याह समाधिरितिउक्तयमाद्यष्टांगसहितनिर्विकल्पकसमाधे र्निर्विघ्नानुष्ठानसिद्ध्यर्थं विघ्नज्ञानव्यतिरेकेण तन्निवारणस्य कर्तुमशक्यत्वादस्य चतुरो विघ्नान् दर्शयति अस्येति तत्राद्यं विघ्नं लक्षयति लयस्तावदिति लयो द्विविधः चिरकालप्रयुक्ताष्टांगसहितनिर्विकल्पकसमाध्यभ्यासपाटवेनातितप्तलोहतलक्षिप्तजलबिंदुवत् तैलरहितदीपकलिकावच्च प्रत्यगभिन्ने परमानंदे चित्तवृत्तेर्लयः प्रथमः द्वितीयस्तु मूर्छावस्थावत् आलस्येन चित्तवृत्तेर्बाह्यशब्दादिविषयग्रहणानादरे सति प्रसंगात् स्वरूपानवभासनाद्वृत्ते

अद्वितीयवस्तुन्यंतरिंद्रियावधारणं धारणा तन्नाद्वितीयवस्तुनि विच्छिद्य विच्छिद्यांतरिन्द्रियवृत्तिप्रवाहीकरणं ध्यानम् समाधिरुक्तः लक्षणः सविकल्पक एवमस्यांगिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाः चत्वारो विघ्नाः संभवंति लयस्तावदखंडवस्त्वनवलंबनेन चित्तवृत्तेर्निद्रा अखंडवस्त्वनवलंबनेन चित्तवृत्तेरन्यावलंबनं विक्षेपः लयविक्षेपाभावेपि चित्तवृत्ते रागादिवासनया स्तब्धीभावादखंडवस्त्वनवलंबनं कषायः॥ ११ स्तब्धीभावलक्षणा निद्रारूपः तत्राद्यमंगीकृत्य द्वितीयस्य विभक्तेन तन्नसागाम्यन तत्स्वरूपमाह लयस्तावदिति द्वितीयं विघ्नमाह अखंडेति अखंडवस्तुग्रहणायांतर्मुखतया प्रवृत्तायाः चित्तवृत्तेः चिदनवलंबनेनतत्त्वपक्षिवस्तुनर्बाह्यविषयग्रहणाय प्रवृत्तिर्विक्षेप इत्यर्थः तृतीयं विघ्नमाह लयेति रागादयः त्रिविधाः बाह्या आभ्यंतराः वासनामात्ररूपाश्चेति बाह्याः पुत्रादिविषयाः आभ्यंतरा मनोराज्यादयः संस्काररूपा वासनामयाः तत्रानेकजन्माभ्यस्तबाह्याभ्यंतररागाद्यनुभवजनितसंस्कारैः कलुषीकृतं चित्तं कथंचिच्छ्रवणादिसाधनेनांतर्मुखमपि चैतन्यग्रहणसामर्थ्याभावान्मध्ये एव स्तब्धीभवति यथा राजदर्शनाय स्वगृहान्निर्गतस्य राजमंदिरप्रविष्टस्य कस्यचिद्दुष्टस्य द्वारपालनिरोधेन स्तब्धीभावः तथा परित्यक्तबाह्यविषयस्याखंडवस्तुग्रहणाय प्रवृत्तस्य चित्तस्योद्बुद्धरागादिसंस्कारैः स्तब्धीभावादखंडवस्त्वग्रह

वे॰सा॰ चतुर्थविघ्नमाह अखंडेति उक्तसविकल्पकसमाध्योर्मध्ये द्वितीयो शब्दानुविद्धः त्रिपुटीविशिष्टः तस्मिन्नानंदो बाह्यशब्दादिविषयप्रपंचभास्त्यागप्रयुक्तो न तु
टी॰सु॰ चैतन्यप्रयुक्तः यथा निधिग्रहणाय प्रवृत्तस्य निधिपरिपालकभूतप्रेताद्याहृतस्य निधिप्राप्त्यभावेपि भूताद्यनिष्टनिवृत्तिमात्रेणाकोपि महानानंदो भवति तथा स
२५ विकल्पसमाधावखंडवस्त्वनवलंबनेन निरानंदरसास्वादनाभावेपि अनिष्टबाह्यप्रपंचनिवृत्तिजन्यानंदं सविकल्पकरूपं ब्रह्मानंदभ्रमेणास्वादयतीति तत्रा
सास्वादनमित्यर्थः लक्षणांतरमाह समाधीति निर्विकल्पकसमाध्यारंभकालेऽनुभूयमानसविकल्पकानंदस्यागास्तहिष्णुतया पुनः तस्यैवास्वादनं रसास्वादइत्य
र्थः प्रोक्तविघ्नचतुष्टयनिवृत्तेः फलमाह अनेनेति लयादिविघ्नाभावसहितं चित्तं यदा निर्वातदीपवदचलमखंडचैतन्यमात्रमवतिष्ठते तदा निर्विकल्पसमाधि

अखंडवस्त्वनवलंबनेनापि चित्तवृत्तेः सविकल्पकानंदास्वादनं रसास्वादः समाध्यारंभसमये सविकल्पकानंदास्वादनं वा
अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीयवदचलं सदखंडचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकसमाधिरुच्य
ते तदुक्तं लये संबोधयेत् चित्तं विक्षिप्तं शमयेत्पुनः सकषायं विजानीयात् समप्राप्तं न चालयेत् नास्वादयेत् रसं तत्र ॥ ९ ॥

रित्यर्थः लयादिविघ्नसद्भावे तन्निवृत्तिप्रकारं स्पष्टमतिमाह तदुक्तमिति पूर्वोक्तनिद्रालक्षणे लये जाते सति तन्निवृत्त्यर्थं चित्तं संबोधयेत् चित्तगतजाड्या
दिपरित्यागेन चित्तमुद्बोधयेत् उक्तविक्षेपयुक्तं चित्तं यदा भवति तदा विषयवैराग्यादिना चित्तं शमयेत् बहिर्मुखतां परित्यज्यांतर्मुखं कुर्यात् उक्तरागादिक
षायसहितं चित्तं यदा भवेत्तदा विजानीयादियं रागादिवासना बाह्यविषयप्रापिका नत्वखंडवस्तुप्रापिका अतो नेयं समीचीनेति विविच्य प्रसक्तश्रवणवासा
नायाः सकाशादियं निकृष्टाऽतस्त्याज्येयमिति जानीयादित्यर्थः यदा सम्यग्वस्तुन्यप्राप्तं चित्तं यदा भवति तदा न चितं कषायसहितं जानीयात्तच्च चित्तं
यावता कालेन रागादिवासनाक्षयसहितं भवति तावत्कालं तच्चित्तं स्वस्थाना न्न चालयेद्वासनाक्षयानंतरं चित्तं स्वत एव प्रसक्तश्रवणं भवतीत्यर्थः राम॰
नास्वादयेदिति पूर्वोक्तसविकल्पकारसं विषयप्रपंचभास्त्यागजन्यं नास्वादयेन्नानुभवे ॥० २५

तत्रश्रुतिमाह निःसंग इति यतो निःसंगो वैषयिकसुखदुःखादिसंगरहितः अतः प्रज्ञया युक्तो भवेत् स्थिरप्रज्ञो भवेदित्यर्थः तदुक्तं भगवता प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यत इति तस्मात्त्वयादि विघ्नाभावविशिष्टचित्तस्य चिन्मात्रतया वस्थानं निर्विकल्पकसमाधिरित्यर्थः तत्र भगवानाह यथेति अथ निर्विकल्पकसमाधौ स्वगुरूपदिष्टमार्गे गायथा मनिकिंचिद्विचार्यते पंचभूमिकोपेतस्य चित्तस्य भूमिकात्रयपरित्यागेनावशिष्टं भूमिकाद्वयं समाधिरित्युच्यते कास्ता पंचभूमिकाः क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धं चेति पंचचित्तभूमिकाः तत्र सुरसंपत्त्या कशास्त्र देहवासनानुवर्तमानं क्षिप्तमित्युच्यते निद्रातंद्रादिग्रस्तं चित्तं मूढमित्युच्यते कदाचित्तु ध्यानयुक्तमपि बहिर्गमनशीलं उक्तक्षिप्ताद्विशिष्टतया विक्षिप्तं चित्तमित्युच्यते तत्र क्षिप्तमूढयोः समाधित्वशंकैव नास्ति विक्षिप्ते तु चेतसि विक्षेपांतर्गततयाद्दहनांतर्गत बीजवच्चित्तस्य सद्य एव विनाशात्तदायि न समाधिः एकाग्रतां पतंजलिः सूत्रयति शांतोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणाम इति अस्यार्थः शांतोऽतीतः उदितो वर्तमानः प्रत्ययः चित्तवृत्तिरतीतवर्तमानप्रत्य

निःसंगः प्रज्ञया भवेदिति यथा दीपो निवातस्थो नेंगते सोपमा स्मृतेति॥

यौ भवतः अतीतप्रत्ययो यं पदार्थं गृह्णाति उदितोपि तमेव चेत् गृह्णीयात्तदा तावुभौ तुल्यौ भवतः तादृश एव चित्तस्य परिणाम एकाग्रतेत्युच्यते एकाग्रताभिवृद्धिलक्षणं समाधिं सूत्रयति सर्वार्थैकाग्रतयोः क्षयोदयौ चित्तस्य परिणामः समाधिरिति रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वानर्थान्पदार्थान्परिगृह्णातितस्य रजोगुणस्य निरोधायक्रियमाणेन प्रयत्नविशेषेण दिने दिने योगिनः सर्वार्थता क्षीयते एकाग्रता चोदेति तादृशः चित्तस्य परिणामः समाधिरित्यर्थः अस्य समाधेरष्टांगेषु यमनियमासनप्राणायामप्रत्याहाराः पंच बहिरंगानि हिंसादिभ्यो निषिद्धेभ्यो योगिनः कर्मभ्यो यमयंति निवर्तयंतीत्यहिंसादयो यमाः जन्महेतोः काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे नियमयंति प्रेरयंतीति शौचादयो नियमाः यमनियमयोरनुष्ठानं वैलक्षण्यं स्मर्यते यमान्सेवेत सततं न नित्यं नियमान्बुधः यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन्निति ब्रह्मायमनियमौ समीक्ष्य मवद्धुलेषु प्रयत्नेषु बुद्धिमनुसंदधीत।

॥ ५ु३ १ १२ ११ २२ १

ध्यानधारणासमाधित्रयंमनोविषयत्वात्संप्रज्ञातसमाधेरंतरंगंयमादिकंतुवहिरंगंतथाचकेनापिपुण्येनांतरंगेप्रथमंलब्धेसतिवहिरंगलाभायनातिप्रयासःकर्तव्यःय
द्यपिपतंजलिनाभौतिकभूततन्मात्रेन्द्रियाहंकारविषयाःसंप्रज्ञातसमाधयोवहुधाप्रपंचिताःतथापितेषामंतर्धानाकाशगमनादिसिद्धिहेतुतयामुक्तिहेतुसमाधिवि
रोधित्वान्नास्माभिःतत्रादरःक्रियतेतथाचोक्तंवाशिष्ठेश्रीरामउवाचजीवन्मुक्तशरीराणांकथमात्मविदांवरशक्तयोनेहदृश्यंतेआकाशगमनादिकाःश्रीवशिष्ठउवाच
अनात्मविदमुक्तोपिसिद्धिजालानिवांछतिद्रव्यमंत्रक्रियाकालयुक्त्याप्नोत्येवराघवनात्मज्ञस्यैषविषयआत्मज्ञोह्यात्मनात्मदृक् आत्मनात्मनिसंतुष्टोनावि
द्यामनुधावतियेकेचनजगद्भावाःताननविद्यामयान्विदुःकथंतेषुकिलात्मज्ञःस्यक्ताविद्योनिमज्जतिद्रव्यमंत्रक्रियाकालयुक्तयःसाधुसिद्धिदाःपरमात्मपदप्राप्तौनो
पकुर्वंतिकाश्चनेतिआत्मविषयस्तुसंप्रज्ञातसमाधिर्वासनाक्षयस्यनिरोधसमाधेश्चहेतुःतस्मात्तत्रादरःकृतःअथपंचमभूमिकारूढचित्तस्यनिरोधलक्षणःस

अथजीवन्मुक्तस्यलक्षणमुच्यतेजीवन्मुक्तोनामस्वस्वरूपाखंडब्रह्मज्ञानेनतदज्ञानवाधनद्वारास्वस्वरूपखंडेब्रह्मणिसाक्षात्कृ
तेऽज्ञानतत्कार्यसंचितकर्मसंशयविपर्य्यादीनामपिवाधितत्वादखिलवंधरहितोब्रह्मनिष्ठः॥ १९ माधिर्निरूप्यतेतंचसमाधिंसूत्रयतिव्यु

त्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौनिरोधलक्षणचितान्वयोनिरोधःपरिणामइतिव्युत्थानसंस्काराःसमाधिविरोधिनःतेचनिरोधहेतुनायोगिप्रयत्नेनप्र
तिदिनंप्रतिक्षणंचाभिभूयंतेतद्विरोधिनश्चनिरोधसंस्काराःप्रादुर्भवंतितथासतिनिरोधएकैकस्मिन्क्षणेचित्तमनुगच्छतिसोयमीदृशःचित्तस्यपरिणामोभवति
यदातदाऽसंप्रज्ञातसमाधिरुच्यतइत्यर्थःएतत्समाधिद्वयंजीवन्मुक्तस्यैवभवतिनान्यस्येतिमनसिनिधायप्रथमंजीवन्मुक्तस्यस्वरूपंप्रतिपादयितुंप्रतिजानीते
अथेतितस्यलक्षणमाहजीवन्मुक्तोनामेत्यादिनाब्रह्मनिष्ठइत्यंतेनजीवन्मुक्तोनामेतिअत्राखिलवंधरहितोब्रह्मनिष्ठोजीवन्मुक्तइतितस्यलक्षणंजीवतः
पुरुषस्यहिकर्तृत्वभोक्तृत्वसुखदुःखलक्षणोखिलोयःचित्तधर्मःसक्लेशरूपत्वाद्वंधोभवतितेनरहितःपरित्यक्तवंधनःब्रह्मणिनिष्ठातदेकपरतायस्य
सब्रह्मनिष्ठःजीवन्मुक्तइत्यर्थःसकलवंधराहित्येहेतुमाहस्वस्वरूपेतिगुरुश्रुतिस्वानुभवैर्ब्रह्मात्मैकत्वविज्ञानेनमूलाज्ञानतत्कार्यसंचितकर्मादीनामपिवाधित २५

नन्वेतादृशस्यजीवन्मुक्तस्यदेहेंद्रियादिभानमस्तिनवेत्याशंक्यादग्धपटन्यायेनेन्द्रजालनिर्मितसौधसमुद्रादिवद्बाधितानुवृत्त्यामिथ्यात्वेनभानेपिपरमार्थत
याभानंनेत्याह अयमित्यादिनानपश्यतीत्यंतेन अस्मिन्नर्थेश्रुतिमाह सचक्षुरिति उक्तेर्थेआचार्यवचनंप्रमाणयतिउक्तंचेतिइहजगतिसएवात्मविन्नान्यइति
मेनिश्चयइत्यन्वयःसकइत्यपेक्षायामाह यइति यःकोपिमहापुरुषोब्रह्मात्मैकत्वसाक्षात्कारेणनिरस्तसमस्तभेदबुद्धिःसुषुप्त्यवस्थायांयथाद्वैतंनपश्यति
तथाब्रह्मदृष्टिदार्ढ्येनजाग्रदवस्थायामपिद्वैतंनपश्यतितद्दृष्ट्याब्रह्मव्यतिरिक्तजडपदार्थाभावात्सतथोक्तः किंचकदाचित्व्युत्थानदशायामाविद्यकसंस्का

अयंतुव्युत्थानसमयेमांसशोणितमूत्रपुरीषादिभाजनेनस्थूलशरीरेणांध्यमौग्ध्यापटुत्वादिभाजनेनेंद्रियग्रामेणअशनापिपासा
भाजनेनप्राणेनशोकमोहादिभाजनेनांतःकरणेनचपूर्वपूर्ववासनयाक्रियमाणानिकर्माणिभुज्यमानानिज्ञानाविरुद्धप्रारब्ध
फलानिचपश्यन्नपिबाधितत्वात्परमार्थतोनपश्यतियथेंद्रजालमितिज्ञानवांस्तदिदमिंद्रजालंपश्यन्नपिपरमार्थमिदमिति
नपश्यतिसचक्षुरचक्षुरिवसकर्णोऽकर्णइतिश्रुतेः उक्तंचसुषुप्तिवज्जाग्रतियोनपश्यतिद्वयंतुपश्यन्नपिचाद्वयत्वतः न
थाचकुर्वन्नपिनिष्क्रियश्चयःसआत्मविन्नान्यइतीहनिश्चयः अस्यज्ञानात्पूर्वंविद्यमानानामेवाहारविहारादीनामनुवृत्तिव
च्छुभवासनानामेवानुवृत्तिर्भवति।

रलेशवशाद्भिक्षाटनादिव्यवहारेणाद्वयंपश्यन्नपिसमाध्यस्सामर्थ्यवशाद्द्वयत्वेनपश्यतिसतथोक्तःयश्च
लोकसंग्रहार्थंनित्यादिकर्माणिकुर्वन्नपिआत्मनिकर्तृत्वाभावनिश्चयेननिष्क्रियःकर्मरहितोभवतिकर्मफलेननलिप्यतेसजीवन्मुक्तोनात्रसंशयःकर्ता
बइत्यर्थः नन्वस्यजीवन्मुक्तस्ययोगीश्वरस्यममपुण्यंपापंचनास्तीत्यभिमानवशाद्यथेष्टाचरणप्रसंगमाशंक्यपरिहरतिअस्येतिअस्यपूर्वोक्तजीवन्मुक्त
स्यज्ञानात्प्रागेवशांत्यादिगुणैःशुभवासनायानियारितत्वात्संसारदशायामप्रयत्नेनाहारादिप्रवृत्तिवत्तत्त्वज्ञानोत्तरमपिशुभानामेववासनानामनुवृत्तिर्भ

विनाश्रमिष्टकौ::॥

वे॰सा॰ ननुशुभवासनानुवृत्तेरपिप्रयोजनाभावात्किंतदनुवृत्त्येत्यतआह शुभाशुभयोरितितस्माज्जीवन्मुक्तस्ययथेष्टाचरणप्रसंगोनास्तीतिभावः अस्मिन्नर्थेग्रंथां
टी॰सु॰ तरंसंवादयति तदुक्तमितिजीवन्मुक्तस्यब्रह्मज्ञानत्वाभिमानोनास्तीत्यत्रापिसंमतिमाह ब्रह्मवित्त्वमिति ननुविदुषांयथेष्टाचरणप्रसंगोनास्तीत्युक्तंतद
२६ नुपपन्नंनमातृवधेननपितृवधेनयस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यतेहत्वापिसइमांल्लोकान्नहंतिननिबध्यतइतिहयमेधशतसहस्राण्यथकुरुतेब्र
ह्मघातलक्षाणिपरमात्मविन्नपुण्यैर्नचपापैर्लिप्यतेमनुजः अश्वमेधसहस्राणिब्रह्महत्याशतानिचकुर्वन्नपि नलिप्येतयद्येकत्वंप्रपश्यतिसभयाद्भ
यंप्राप्तःतदयंयततेचयःसपुनःसभयंगंतुंस्वतंत्रश्चेन्नेहेत्यतिआरब्धकर्मनानात्वाद्बुधानामन्यथान्यथावर्तनंतेनशास्त्रार्थेविश्रांतव्यंनपंडितैरित्यादिषु

शुभाशुभयोरौदासीन्यंवातदुक्तंबुद्धाद्वैतंसतत्त्वस्ययथेष्टाचरणंयदिशुनांतत्त्वदृशांचैवकोभेदोऽशुचिभक्षणइतिब्रह्मवि ॥
त्त्वंतथामुक्त्वासआत्मज्ञोनचेतरइतितदानीममानित्वादीनिज्ञानसाधनानिअद्वेष्टृत्वादयःसद्गुणाश्चालंकारवदनुवर्तंतेतदु ॥

तिष्ठत्वभियुक्तवाक्यैर्विदुषांयथेष्टाचरणस्वांगीकारादितिचेत्सत्यंतेषांचवचनानांविद्वत्स्तुतिपरत्वेनतत्कर्तव्यमित्यत्रतात्पर्याभावात् तदुक्तमाचार्यैःअ
धर्माज्जायतेज्ञानंयथेष्टाचरणंततःधर्मकार्यंकथंतत्स्याद्यत्रधर्मोविनश्यतीतिनन्वेवममानित्वमदंभित्वमहिंसाक्षांतिरार्जवमित्यादिषूक्तसाधना
स्य अद्वेष्टासर्वभूतानामित्यादिवचनैःप्रतिपाद्यमानाद्वेष्टृत्वादिगुणसमूहस्यचविदुषांसंपाद्यमानत्वश्रवणात्तेनसहविरोधमाशंक्यअमानित्वादिसं
पादनस्यविविदिषासंन्यासविषयत्वाद्विदुषांतुलक्षणत्वेनालंकारवदनुवर्तमानानान्नविरोधइत्याहतदानीमितिजीवन्मुक्तावस्थायामित्यर्थः अस्मिन्नर्थे
वार्त्तिकसंमतिमाहतदुक्तमिति अस्यविद्वत्संन्यासिनोजीवन्मुक्तस्याद्वेष्टृत्वादयोगुणाः अप्रयत्नेनस्वतएवभवंतिनतुसाधनरूपिणःतंप्रतितेसाधनरू राम॰ २६

उत्पन्नेति यत उत्पन्नात्मावबोधो ब्रह्मात्मैकत्वनिश्चयरूपः ततः तस्य ते गुणाः स्वभावेनैव भवन्तीत्यन्वयः इयता प्रबंधेन प्रतिपादितेऽस्मिन्वेदांतसाराख्ये ग्रन्थे श्रीमत्परमगुरुपरमहंसपरिव्राजकाचार्यसदानन्दयोगींद्रेण महापुरुषेण अथवेदांतो नामेत्यारभ्य साधनचतुष्टयसंपन्नस्य प्रमातुरधिकारिणः मूलाज्ञाननिवृत्तिपरमानंदप्राप्तिसिद्धये प्रतीयमानाविद्यकसकलप्रपंचजातस्य ब्रह्मण्यध्यारोपापवादपुरःसरं सविस्तरं निःप्रपंचत्वं प्रतिपाद्य तत्साधनं च श्रवणादिकं सप्रपंचमभिधाय तस्यैवाधिकारिणः तत्त्वमस्यादिवाक्यश्रवणानंतरं ब्रह्मात्मैकत्वसाक्षात्कारेण निरस्तसमस्तभेदबुद्धेः जीवन्मुक्तत्वं प्रदर्शितं एतावतैव कार्यसिद्धिः किंबहुलेखनेनेति मनसि निधाय संप्रत्यस्यैव जीवन्मुक्तस्य स्वप्रकाशात्मानंदानुभवैकनिष्ठस्य भेदप्रतीत्यभावेपि अविद्यालेशवशात्प्रारब्धकर्म भुंजानो भिक्षाटनादिदेहयात्रामात्रक्रियावशिष्टो ब्रह्मभूत एवावतिष्ठत इत्युपसंहरति किंबहुनेत्यादिना प्रारब्धफलं त्रिविधं स्वेच्छाकृतं परेच्छाकृतं अनि

उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः अयत्नतो भवन्त्यस्य न तु साधनरूपिणः इति किंबहुनायं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणानि आरब्धफलान्यनुभवन्नंतःकरणाभासादीनामवभासकः सन् तदवसाने प्रत्यगानंद ॥ परब्रह्मणि

च्छाकृतं चेति तत्र सुत्थानदशायामीश्वरप्रेरितया स्वकीयेच्छया कृतं स्वेच्छाकृतं भिक्षाटनादि समाध्यवस्थायां शिष्यादिभिर्दीयमानमन्नादिकं परेच्छाकृतं समाध्यवस्थायां सुत्थानदशायां वा आकाशफलपातवदकस्माज्जायमानं पाषाणपतनकंटकवेधादिकमनिच्छाकृतं स चायं जीवन्मुक्तः प्रोक्तं त्रिविधं प्रारब्धप्रापितं सुखदुःखमनुभवन् बुद्ध्यादिसाक्षितया सर्वावभासकः सन् भोगेनारब्धकर्मक्षये सति प्रत्यगभिन्नपरमात्मनि प्राणादिलयानंतरं प्रनष्टाविद्यकसंसारः कृतकृत्यः सन् गलितसकलभेदप्रतिभासो ब्रह्मैवावतिष्ठत इति सकलवेदरहस्यतात्पर्यमित्यर्थः अयं जीवन्मुक्तो बुद्ध्याद्युपाधिविलये सति घटाद्युपाधिविनिर्मुक्ताकाशवन्मुक्त इत्युपचारव्यवहारभाग्भवति बद्धत्वस्याप्यवास्तवत्वात् तदुक्तमाचार्यैः न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता अस्य जीवन्मुक्तस्योपाधिविगमसमये प्राणाख्यं लिंगशरीरं अतितरलोदधिसलिलबिन्दुवत् स्वस्वांशभिन्नपर

॥०॥५॥६॥

वे·सा· अत्रश्रुतिमाहनतस्येति अयंजीवन्मुक्तोजीवन्नेवदृश्यमानाद्रागद्वेषादिबंधनाद्विशेषेणमुक्तःसन्वर्तमानदेहपातेसतिभाविदेहबंधाद्विशेषेणमुच्यतइत्यस्य

टी·सु· त्रायिश्रुतिमाहविमुक्तश्चेतिबृहदारण्यकेपियदासर्वेप्रमुच्यंतेकामायेस्यहृदिस्थिताः अथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुतइतिवाशिष्टेपिजीवन्मुक्तपदंत्य

२१ क्त्वास्वदेहेकालसात्कृतेभवत्यदेहमुक्तत्वंपवनोस्पंदतामिवेति असंगोह्ययंपुरुषआकाशवत्सर्वगतश्चनित्यः अस्नाविरंशुद्धमपापविद्धमित्यादिश्रुत्याप्र

त्यगात्मनोनित्यत्वपरिपूर्णत्वकूटस्थत्वश्रवणात् उत्पत्त्याप्तिविकृतिसंस्कारचतुर्विधक्रियाफलविलक्षणत्वेनविद्ययानित्यनिवृत्ताविद्यामात्रेणप्राप्तए

वात्मापुनःप्राप्तएवेत्युपचर्यते अधिष्ठानस्यगमनाभावेनअध्यस्तस्यलोकांतरगमनायोगान्नसालोक्यादिमुक्तिसंभवःनन्वप्राप्तस्यक्रियासाध्यस्यवस्तु

प्राणोलीनेसतिअज्ञानतत्कार्यसंस्काराणामपिविनाशात्परमकैवल्यमानंदैकरसमखिलभेदप्रतिभासरहितमखंडब्रह्मा
वतिष्ठते ॥नतस्यप्राणाउत्क्रामंत्यत्रैवसमवलीयंतेविमुक्तश्चविमुच्यतइत्यादिश्रुतेः ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६

नोविद्यमानानर्थनिवृत्तेश्चपुरुषार्थत्वंदृष्टं अत्रतदभावात्कथंपुरुषार्थत्वमितिचेत्नतयोरेवपुरुषार्थत्वमितिनियमाभावात् स्वछायायामारोपितर

क्षसोविस्मृतकंठगतचामीकरस्यभ्रांतपुरुषस्याप्तवाक्येनतयोर्निवृत्त्यातयोरपिपुरुषार्थत्वदृष्टेः अत्रसंग्रहः आत्माज्ञानमलंनिरस्तममलंप्राप्तंचतत्त्वं

परंकंठस्थाभरणादिवत्भ्रमवशाच्छायापिशाचीयथाआप्तोक्त्यासिनिवृत्तिवच्छ्रुतिशिरोवाक्याद्गुरोरुस्थिनाद्भूतध्वांतनिरासतःपरस्त्वंप्राप्तंतयो।

रुच्यतइतिनचमुक्तानांअपिवशिष्ठभीष्मप्रभृतीनामपरोक्षज्ञानिनांपुनर्देहांतरश्रवणात्केवलंज्ञानोत्पत्तिसमयएवात्मज्ञानिनामस्माकंमुक्तिर्भवतीति

कथंविश्वसिमः अतोज्ञानव्यतिरिक्तमप्युपायांतरंकिंचित्कर्त्तव्यमितिवाच्यंशास्त्रप्रामाण्यादेवतदुपपत्तेः ब्रह्मविद्ब्रह्मैवभवतितरतिशोकमात्मविद् राम·
२१

तदुक्तं शेषेणातीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहं ज्ञानसमकालमुक्तः कैवल्यं याति हतशोक इति वशिष्ठादीनां त्वधिकारिकपुरुषत्वेन याव
दधिकारं प्रारब्धवेगप्रयुक्तछायादिना स्वीकृतावांतरदेहपातेपि तद्देहभाविभोगस्य निवारयितुमशक्यत्वात् प्रारब्धस्य विना भोगेन क्षयानुपपत्तेः यावद
धिकारमवस्थितिराधिकारिकाणामिति भगवत्व्यासैर्विशेषितत्वात् अस्मदादीनां च प्रारब्धकर्मणोऽनेकदेहारंभकत्वसंभवेपि चरमदेहं विनाऽप।
रोक्षज्ञानोत्पत्तेरसंभवात् वामदेवेन तथा दृष्टत्वात् अन्यथा गर्भस्थस्य श्रवणाद्यभावेन ज्ञानोत्पत्त्यनुपपत्तेः ननु ज्ञानिनामपि स्वप्नावस्थायां देहांतरस्वीका
रवन्मुक्तानामपि पुनर्देहांतरस्वीकारः किं न स्यादिति चेत् न कंठे स्वप्ने समाविशेदित्यादिवाक्येषु कंठान्निर्गमनाभावश्रवणाद्देहांतरप्राप्तेस्तु तदनंतरम।
तिपत्ताविसत्र देहान्निर्गमनश्रवणाद्दृष्टमयं तदुक्तं स्कांदे यस्मिन्देहे दृढं ज्ञानमपरोक्षं विजायते तद्देहपातपर्यंतमेव संसारदर्शनं पुरापि नास्ति संसारदर्श
नं परमार्थतः कथं तद्दर्शनं देहविनाशादूर्ध्वं मुच्यते तस्माद्ब्रह्मात्मविज्ञानदृढं चरमविग्रहे जायते मुक्तिदं ज्ञानं प्रसादादेव मुच्यत इति तस्मात्तु छूक्तं विमु
क्तश्च विमुक्त इति निरस्तदुःखपरिपूर्णमद्वयं सच्चिदात्मकमखंडमक्षरं सर्वदासुखमबोधतस्तत्तैर्वर्जितं सदहमस्मि तत्परम् गोवर्द्धनोद्धरणप्रेरणया विमु
क्तक्षेत्रे पवित्रे नरसिंहयोगी वेदांतसारस्य च कार टीकां सुबोधिनीं विश्वपतेः पुरस्तात् जाते पंचशताधिके दशशते संवत्सराणां पुनः संजाते दशवत्स
रप्रभुवरश्रीशालिवाहेशके प्राप्ते दुर्मुखवत्सरे शुभशुचौ मासे नवम्यां तिथौ प्राप्ते भार्गववासरे नरहरिष्टीकां चकारोज्ज्वलाम् इति श्रीपरमहंसपरि
व्राजकाचार्यश्रीमद्ब्रह्मानंदभगवत्पूज्यपादशिष्यनृसिंहसरस्वतीविरचिता वेदांतसारटीका समाप्ता ॥ मी॰ आषाढ कृष्ण अमावास्याम् ३० ॥ ॥
॥ रविवासरे ॥ संवत् १९३९ ॥

॥ इतिवेदान्तसारटीकासुबोधनीसंयुक्तसमाप्ता ॥ ॥